म०प्र०—तस्य—विकल्पस्य ( अष्टदोषदुष्टत्वादिति ) यदा आमिक्षाया विश्वेदेवैःसह संबंधस्तदा वाजिशास्त्रे स्वार्थानुष्ठापकत्वलक्षणप्रामाण्यप्रयोजकनिर्दोषत्वादौ सत्यपि प्रामाण्यपरित्याग एकोदोषः स्वार्थाननुष्ठापकत्वलक्षणप्रामाण्याभावप्रयोजकदोषेचासत्यपि प्रामाण्याभावाभ्युपगम इति द्वितीयो दोषः । पुनश्च यदा वाजिनस्य विश्वेदेवैः सह संबंधस्तदामिक्षाशास्त्रे वाजिशास्त्रोक्तदोषद्वयं वाजिशास्त्रेतु परित्यक्तप्रामाण्याभ्युपगमः स्वीकृताप्रामाण्यपरित्यागश्चेति द्वौ दोषौ एवं प्रयोगद्वयेन वाजिशास्त्रे चत्वारो दोषा आमिक्षाशास्त्रे दोषद्वयम् ।पुनश्च यदा विश्वदेवैरामिक्षासंबंधस्तदामिक्षाशास्त्रेपरित्यक्तप्रामाण्याभ्युपगमः स्वीकृताप्रामाण्यपरित्यागश्चेति दोषद्वयमेवं प्रयोगत्रयेण शास्त्रेषु विकल्पस्याष्टदोषापादकत्वादित्यर्थः । श्रुत्यवगतामिक्षावरुद्धत्वेन—तद्धितश्रुत्यवगतामिक्षासंबन्धेन । श्रुत्येति—तद्धितश्रुत्यवगतामिक्षैवैषां विश्वेषां देवानां शेषो भोगसाधनं वाक्यप्रमाणेन वाजिनमेषांनशेषः । ननु वाजिनद्रव्यस्य विश्वदेवैः सह संबंधः कुतो न भवतीत्याशंक्य हेतुगर्भितवाजिनविशेषणमाह ( तयाश्रुत्यानिराकृतमिति ) तद्धितश्रुत्या विश्वदेवैः सह वाजिनद्रव्यसंबंधस्य निराकृतत्वादित्यर्थः । तस्यनिराकृतत्वे हेतुमाह ( तद्दुर्बलप्रमाणत्वादिति ) श्रुत्यपेक्षया तस्य वाक्यस्य दुर्बलप्रमाणत्वादित्यर्थः । परममूले ( तत्रापीति ) वैश्वदेवयागेपि वाजिनद्रव्यस्य जिज्ञासाविषयत्वाभावेपि वाजिनद्रव्यस्य ) जिज्ञासाविषयत्वयोग्यत्वमस्त्येवेत्यर्थः । परममूले ( अवच्छेदकत्वादिति ) तथाच वैश्वदेवयागस्य साकांक्षत्वाद्वैश्वदेवयागे वाजिनान्वयापत्तिरिति भावः ( स्वसमभिव्याहृतपदेति ) आमिक्षादिपदेन सह समभिव्याहृतं सहोच्चरितं यद्वाजिनादिपदं तेनोपस्थितवाजिनादिपदार्थान्वयबोधाभावविशिष्टप्रदेयद्रव्यत्वमित्यर्थः ।

**मू०—न, स्वसमानजातीयपदार्थान्वयबोधविरहसहकृतप्रदेयद्रव्यत्वस्यैव तदवच्छेदकत्वेन वाजिनद्रव्यस्य स्वसमानजातीयान्वयबोधसहकृतत्वेन तादृशावच्छेदकत्वाभावात्, आमिक्षायां तु नैवं वाजिनान्वयस्य तदानुपस्थानात् ॥**

शि० म०—तत्त्वामिक्षायामेवेति परिहरति ( नस्वसमानजातीयेति ) नन्वस्तु वैश्वदेवयागे प्रथममेव वाजिनान्वयबोध इत्यामिक्षैव निराकांक्षास्यादित्याशंक्य श्रौतामिक्षासंबंधात् तत्सापेक्षानंतरप्रवृत्तवाक्यप्रमाणकवाजिनान्वयस्य प्रथममनुपस्थितत्वान्नामिक्षाया नैराकांक्ष्यमित्याह ( आमिक्षायामिति ) ॥

म०प्र०—( तत्त्वामिक्षायामेवेति ) येन क्रमेण पाठस्तेनैव क्रमेण पदार्थोपस्थितिस्तेनैव क्रमेणान्वयबोध इति नियमसत्त्वेनामिक्षान्वयबोधकालेवैश्वदेवयागे वाजिनान्वय-

बोधाभावस्य सत्त्वेन स्वसमभिव्याहृतपदस्मारितवाजिनपदार्थान्वयबोधाभावविशिष्ट-द्रव्यत्वमामिक्षायामेव नतुवाजिने उक्तनियमाद्वैश्वदेवयागे वाजिनान्वयबोधकाले आमि-क्षान्वयबोधस्य सत्त्वेन वाजिनद्रव्ये स्वसमभिव्याहृतामिक्षापदस्मारितामिक्षापदार्था-न्वयबोधाविरहविशिष्टप्रदेयद्रव्यत्वाभावादिति भावः। परममूले ( वाजिनद्रव्यस्येति ) वाजिनद्रव्यस्य, स्वं—वाजिनं तस्य समानजातीयः प्रदेयद्रव्यत्वेनसदृशामिक्षापदार्थस्तस्य यो वैश्वदेवयागेऽन्वयबोधस्तद्विशिष्टत्वेन तादृशस्य वाजिनद्रव्यनिष्ठप्रदेयद्रव्यत्वस्य जिज्ञासाविषयत्वयोग्यतावच्छेदकत्वाभावादित्यर्थः ननु वाजिनद्रव्यनिष्ठप्रदेयद्रव्यत्वे जिज्ञासाविषयत्वयोग्यतावच्छेदकत्वाभावः। स्वसमानजातीयान्वयबोधसहकृतत्वज्ञाप्यः कुत इत्याशंक्याह। परममूले ( स्वसमानजातीयपदार्थान्वयबोधविरहसहकृतेति ) स्वमामिक्षा तस्याः समानजातीयःप्रदेयद्रव्यत्वेनसदृशः पदार्थो वाजिनपदार्थस्तदन्वय-बोधाभावविशिष्टप्रदेयद्रव्यत्वस्यैवतदवच्छेदकत्वेनजिज्ञासाविषयत्वयोग्यतावच्छेदकत्वेने-त्यर्थः ( निराकांक्षस्यादिति ) वैश्वदेवयागे वाजिनस्यान्वितत्वेनामिक्षायामेव तादृशा-वच्छेदकाभावः किं न स्यादिति भावः। श्रौतामिक्षासंबंधादित्यस्य प्रथममनुपस्थि-तत्वादित्यनेनान्वयः। ( तत्सापेक्षेति ) श्रुतिसापेक्षं श्रौतामिक्षसंबंधोत्तरप्रवृत्तं च यद्वाक्यं तत्प्रमाणकवाजिनान्वयस्येत्यर्थः ( नैराकांक्ष्यमिति ) तथाचामिक्षायां न तादृशावच्छेदकाभावइति भावः परममूले ( नैवमिति ) स्वसमानजातीयान्वयबोधवि-शिष्टप्रदेयद्रव्यत्वंनेत्यर्थः। परममूले, तदा—प्रथमश्रुतामिक्षान्वयबोधकाले। परममूले, अनुपस्थानात्—उपस्थित्यभावात्॥

सू०—उदाहरणांतरेष्वपि दुर्बलप्रयोजक आकांक्षाविरह एव द्रष्टव्यः॥

शि० म०—ननु यस्य वाक्ये स्वतः प्रामाण्यबुद्ध्या प्रथमं वाजि-नान्वयबोधः तदा आमिक्षायां नैराकांक्ष्यं दुर्वारमिति चेत् न, प्रमाण-मूलान्वयबोधाभावसहकृतप्रदेयद्रव्यत्वस्यैवात्र जिज्ञासाविषयत्वयोग्य-तावच्छेदकत्वेन विवक्षितत्वात्। एवं श्रौतामिक्षान्विते वैश्वदेवयागे वाजिनस्य निराकांक्षत्वात्। तदंगत्वबोधकस्य वाजिनवाक्यस्य दुर्बल-त्वमित्युक्तं संप्रत्यन्यत्रापि तदभावप्रयुक्तमेव दौर्बल्यमित्याह ( उदाहर-णांतरेष्विति ) ऐन्द्र्या गार्हपत्यमुपतिष्ठत इत्यादि उदाहरणांतरेष्वित्यर्थः। तत्र ह्यैन्द्र्या गार्हपत्यमुपतिष्ठत इत्यत्र श्रुत्या मंत्रस्य कदाचनस्तरीरसिने-न्द्रसश्चसि दाशुषे इत्यस्यगार्हपत्यांगत्वावगमे निराकांक्षत्वात्। इन्द्रशे-षत्वे लिंगस्य न प्रामाण्यम्॥

म०प्र०–यस्य–यादृशपुरुषस्य, वाक्ये–वाजिभ्यो वाजिनमिति वाक्ये, स्वतः–श्रुतिलिंगकल्पनां विनैव, प्रथमम्–आमिक्षान्वयबोधात्पूर्वकाले आमिक्षायांनैराकांक्ष्यम्–वैश्वदेवयागे वाजिनद्रव्यान्वयेन वैश्वदेवयागनिरूपितामिक्षाविषयकाकांक्षाभावः ( प्रमाणमूलेति ) प्रमाणमूलकस्वसमानजातीयपदार्थान्वयबोधविरहसहकृतप्रदेयद्रव्यत्वस्यैवेत्यर्थः। श्रुतिकल्पनांविनैव वाक्येन वाजिनान्वयबोधः प्रमाणमूलको न भवति श्रुतिप्रमाणनिरपेक्षवाक्यस्याप्रमाणत्वादिति भावः। अत्र–मूले आमिक्षायां वा। श्रौतामिक्षान्विते–श्रौतामिक्षाऽन्विता यस्मिन्स तथा श्रौतामिक्षयान्वितः श्रौतामिक्षान्वित इति वा तस्मिन्, तदंगत्वबोधकस्य–वाजिननिष्ठवैश्वदेवयागांगत्वबोधकस्य। अन्यत्र–लिंगादिषु। तदभावप्रयुक्तमेव–आकांक्षाभावप्रयुक्तमेव। तत्र–उदाहरणांतरेषु मध्ये श्रुतिलिंगविरोधोदाहरणे। ऐंद्रचेति–कदाचनस्तरीरसिनेंद्रसश्चसिदाशुषे इत्यैंद्री ऋक्करणकगार्हपत्यनामकाग्निकर्मकस्तवनं कुर्यादित्यर्थः। श्रुत्या–गार्हपत्यशब्दोत्तरश्रूयमाणद्वितीयाश्रुत्या ( कदाचनेति ) हे इंद्र कदाचन कस्मिन्कालेपि, नस्तरीरसि–हिंसको नासि किंतु, दाशुषे–आहुतिंदत्तवते यजमानाय सश्चसि–प्रीयसे प्रसन्नोभवसीत्यर्थः ( लिंगस्यनप्रामाण्यमिति ) ऐन्द्रचागार्हपत्यमुपतिष्ठते इत्यत्रहिकदाचनस्तरीरसि नेंद्रसश्चसि दाशुषे इत्यनया ऋचा इंद्र उपस्थेय उत गार्हपत्य इति संशये भो इंद्र कदाचिदपि घातको न भवसि किंत्वाहुतिं दत्तवते यजमानाय प्रीयसे इतींद्रप्रकाशनसामर्थ्यलिंगादिंद्रउपस्थेय इति पूर्वपक्षस्य प्राप्तौ सिद्धांतः गार्हपत्यमित्यत्र प्रत्यक्षद्वितीयाश्रुत्या गार्हपत्योपस्थाने विनियुक्तमंत्रस्य पुनर्विनियोगाकांक्षानुदयाद्विनियोजकं लिंगं न प्राप्नोति येनेंद्रोपस्थाने मंत्रो विनियुज्येतेति भावः॥

शि० म०–तथा 'यज्ञायज्ञीये साम्नि ऐरं कृत्वोद्गेयम्' इति श्रुत्या इरापदप्राप्तौ गिरापदस्य निराकांक्षत्वात्तत्प्रापकवाक्यस्य दौर्बल्यं प्रतिष्ठाकामदर्शपूर्णमासप्रयोगे एकविंशतिसंख्यासामधेन्यनुवचनानामेकविंशतिमनुब्रूयात्प्रतिष्ठाकामस्येति श्रुत्या अंगत्वावगतौ पंचदशसंख्यासामधेन्यनुवचनानामाकांक्षाभावात्तदंगत्वबोधकस्य प्रकरणस्य श्रुत्या बाधः। गोदोहनान्विते पशुकामप्रयोगे चमसप्रापकस्य क्रमस्य यजमानस्य याज्येत्यत्र श्रुत्या ऋतुयागेषु याज्याया यजमानकर्तृकत्वावगतौ हौत्रसमाख्याया दुर्बलत्वम्॥

म०प्र०–श्रुतिवाक्ययोर्विरोधे वाक्यदौर्बल्योदाहरणमाह ( यज्ञायज्ञीयेइत्यादिना, यज्ञायज्ञीयसंज्ञकसाम्नि ऐरमिरायाः इरापदस्येदमैरमिरापदारूढसामकृत्वोद्गेयमित्यर्थः। इतिश्रुत्या–ऐरमित्यत्र तद्धितश्रुत्या, गिरापदस्य–समभिव्याहाररूपवाक्यप्राप्तगिरापदस्य, तत्प्रापकवाक्यस्य–गिरापदप्रापकवाक्यस्य श्रुतिप्रकरणविरोधे प्रकरणदौर्ब-

ल्योदाहरणमाह ( प्रतिष्ठाकामेति ) प्रतिष्ठाकामसंबन्धिदर्शपूर्णमासानुष्ठाने इत्यर्थः ( एकविंशतिसंख्यासामधेन्यनुवचनानामिति ) समिधामाधाने करणीभूता ऋचः सामधेन्यः एकविंशतिसंख्याकसामधेनी ऋङ्मंत्राणामित्यर्थः ( एकविंशतिमनुब्रूयात्प्रतिष्ठाकामस्येति ) अनुवचनाश्रितैकविंशतिसंख्यया प्रतिष्ठांभावयेदित्यर्थः। इतिश्रुत्या—इत्यत्रैकविंशतिशब्दोत्तरद्वितीयाश्रुत्या, अंगत्वावगतौ—प्रतिष्ठाकामसंबंधिदर्शपूर्णमासांगत्वावगतौ, पंचदशसंख्यासामधेन्यनुवचनानाम्—पंचदशसामधेन्यो भवंतीत्यत्र श्रूयमाणपंचदशसंख्याकसामधेन्यनुवचनानाम्, तदंगत्वबोधकस्यप्रकरणस्य—पंचदशसामधेनीनामंगत्वबोधकोभयाकांक्षारूपप्रकरणस्य। श्रुतिस्थानविरोधेस्थानदौर्बल्योदाहरणमाह ( गोदोहनान्वितेइति ) गोदोहनमात्रविशिष्टपशुकामपुरुषसंबंधिकर्मणीत्यर्थः क्रमस्य—सन्निधिरूपस्थानप्रमाणस्य श्रुत्याबाध इत्यन्वयः। चमसेनापः प्रणयति गोदोहेन पशुकामस्येत्यत्र गोदोहशब्दोत्तरश्रूयमाणतृतीयाश्रुत्या गोदोहसंज्ञकपात्रस्य पशुफलककर्मांगत्वावगतौ चमससंज्ञकपात्रस्याकांक्षाभावाच्चमसनिष्ठांगत्वबोधकस्थानस्य तृतीयाश्रुत्या बाध इतिभावः। यस्मिन् गुणः कारकतामापद्यते स आश्रय इत्युक्ताश्रयत्ववदपूकर्मकगोदोहमात्रकरणकप्रणयेन पशून्भावयेदिति गोदोहेन पशुकामस्येति वाक्यार्थः श्रुतिसमाख्याविरोधे समाख्यादौर्बल्योदाहरणमाह ( यजमानस्ययाज्येति ) यजेतिप्रेषानंतरं पठ्यमाना ऋग् याज्यायजमानकर्तृकपाठवतीयाज्येतितदर्थः। श्रुत्या-षष्ठीश्रुत्या, ऋतुयागेषु—वसंताद्यृतुदेवताकयागेषु यजमानकर्तृकत्वावगतौ यजमानकर्तृकपाठवत्त्वावगतौ, हौत्रसमाख्यायाः—हौत्रं कांडमित्यत्रकांडबोधकहौत्रशब्दरूपसमाख्याया याज्याया होतृकर्तृकपाठवत्त्वाकांक्षाभावाद्धोतृकर्तृकपाठवत्त्वबोधकहौत्रसमाख्याया दुर्बलत्वमिति भावः॥

**शि० म०**—तथा स्योनं ते सदनं कृणोमीत्यस्य तस्मिन् सीदेत्यस्य पुरोडाशसदनकरणप्रतिष्ठापनयोः लिंगेन प्रत्येकमेव विनियुक्तत्वान्न सकलमंत्रस्य वाक्याद्विकल्पेन समुच्चयेन वा सदनकरणप्रतिष्ठापनयोः प्रयोगः। सूक्तवाक्यनिगदस्य इदं हविरजुषेतामवीवृधेतामित्यादेरग्नीषोमादिपदवत्तदेकवाक्यतापन्नस्य व्यवस्थया पर्वद्वये प्रयोगः। नतु प्रकरणात्ततो विच्छित्यान्यत्रापि प्रयोगः॥

म०प्र०—लिंगवाक्ययोर्विरोधे वाक्यदौर्बल्योदाहरणमाह ( तथास्योनमिति ) विकल्पेन—सदनकरणं कदाचित्पूर्वांशेन कदाचिदुत्तरांशेनैवं पुरोडाशप्रतिष्ठापनमपि कदाचित्पूर्वांशेन कदाचिदुत्तरांशेनेति विकल्पेन, समुच्चयेन उभयांशेन पुरोडाशसदनकरणप्रतिष्ठापनयोः करणमिति समुच्चयेन। प्रयोगः—संबंधः। अत्रेदं बोध्यं स्योनं ते सदनं कृणोमि घृतस्य धारया सुशेवं कल्पयामि तस्मिन् सीदामृते प्रतितिष्ठ व्रीहीणां मेध

सुमनस्यमान इत्यंशद्वयम् । भो पुरोडाश, ते–तव, स्योनं–समीचीनं, सदनं–स्थानं, कृणोमि–करोमि, तच्चस्थानं घृतस्य धारया सुशेवं–सुष्ठुसेवितुं योग्यं कल्पयामि भो व्रीहीणां मेध–व्रीहिसारभूत सुमनस्यमानः–समाहितमनस्कस्त्वं तस्मिन्समीचीन-स्थाने, सीद–उपविश प्रतितिष्ठ स्थिरो भवेति तदर्थः । अयं सर्वोपि मंत्रः पुरोडाश-स्थानकरणं पुरोडाशस्थापने च किंविनियुज्यते किंवार्द्धद्वयं क्रमेणोभयत्र व्यवस्थित-मिति तत्र संशये तस्मिन्निति तच्छब्देन प्रकृतवाचिना पूर्वोत्तरांशयोरेकवाक्यत्वाद्वा-क्यार्थद्वयाभावात्सर्वोपि मंत्रः पुरोडाशस्थानकरणस्यांगं तत्र सर्वेणानेन मंत्रेण पुरोडा-शस्थानं कुर्य्यादिति विनियोजिका श्रुतिः कल्पनीया तथासर्वेणानेन मंत्रेण पुरोडाश-स्थापनं कुर्य्यादिति विनियोजिका श्रुतिः कल्पनीया-मंत्रस्य पुरोडाशसदनांगत्ववत्पुरो-डाशस्थापनांगत्वस्यापि तद्वाक्यबोधितत्वादिति पूर्वपक्षप्राप्तौ राद्धान्तः पूर्वोत्तरार्द्धयोः परस्परान्वयेन संपन्नैकवाक्यस्य पुरोडाशसदनस्थापनकरणे शक्तिमकल्पयित्वा सर्वमं-त्रस्य पुरोडाशसदनस्थापनकरणे विनियोक्तुमनर्हत्वाल्लिंगकल्पनव्यवधानेन श्रुतिंप्रति वाक्यस्य विप्रकृष्टत्वेन प्रत्यक्षलिंगेन वाक्यबाधादर्द्धद्वयं क्रमेणोभयत्र व्यवस्थितमिति अत्राप्याकांक्षाविरह एव वाक्यदौर्बल्यप्रयोजक इति वाक्यप्रकरणयोर्विरोधे प्रकरण-दौर्बल्योदाहरणमाह ( सूक्तवाक्यनिगदस्येति ) मंत्रोद्विविधः करणमंत्रोऽनुवादकमंत्रश्च तत्र यं मंत्रमुच्चार्य्यकर्मक्रियते स करणमंत्रः कर्मसमाप्त्यनंतरं येन मंत्रेण स्तुतिमात्रं क्रियते सोऽनुवादकमंत्रस्तथाच द्विविधमंत्रस्वरूपऋक्समुदायरूपसूक्तवाक्यसंबंध्यनु-वादकमंत्रस्येत्यर्थः ( अग्नीषोमादिपदवदिति ) यथा पूर्णमासीकालिकाग्नेयाग्नीषोमी-योपांशु इति यागत्रयात्मकपूर्णमासे एवाग्नीषोमपदस्य प्रयोगो नामावस्याकालीनाग्ने-यदधियागपयोयागेति यागत्रयात्मकदर्शेऽग्नीषोमपदस्य प्रयोगस्तत्र सोमदेवताया-अभावात् यथाचेंद्राग्निपदस्योक्तयागत्रयात्मकदर्श एव प्रयोगो नोक्तयागत्रयात्मकपूर्ण-मासयागे इंद्राग्निपदस्य प्रयोगस्तत्रेन्द्रदेवताया अभावात्तद्वत्, तदेकवाक्यतापन्नस्य–अग्नीषोमादिपदैकवाक्यतापन्नस्येदंहविरजुषेतामविवृधेतामित्यादिसूक्तवाक्यनिगदस्या-पि, पर्वद्वये–युक्तयागत्रयात्मकदर्शे उक्तयागत्रयात्मकपूर्णमासेच, व्यवस्थया–यथायो-ग्यंप्रयोगो ननूभयाकांक्षालक्षणप्रकरणादग्नीषोमपदादिदंहविरजुषेतामित्यादिकं पृथ-क्कृत्या, अन्यत्रापि–दर्शेपीदं हविरित्यादेः पाठो ननु इंद्राग्निपदात्पृथक्कृत्येदं हविरि-त्यादेरुक्तपूर्णमासे प्रयोग इत्यर्थः । अयमाशयः । अग्नीषोमाविदं हविरजुषेतामवीवृधे-तामहोज्यायोऽक्रातामिंद्राग्नी इदं हविरजुषेतामवीवृधेतामहोज्यायोक्रातामिति सूक्त-वाक्यं श्रूयते तत्र देवतावाचकाग्नीषोमादिपदैकवाक्यतापन्नेदं हविरजुषेतामित्यादिप-दानि तत्तद्देवतावाचकपदाद्विच्छिद्यदर्शादिषु प्रकरणविशेषात्प्रयोक्तव्यानि उततत्तद्देव-तापदेनैकवाक्यतया तत्तद्देवतापदवदेवव्यवस्थितानीति संशयेऽग्नीषोममंत्रगतमपीदं हविरित्यादिकमुक्तयागत्रयात्मकदर्शेऽग्नीषोमपदपरित्यागेन पठनीयम्, तथेंद्राग्निमंत्रग-

तमपीदं हविरित्यादिकमिंद्राग्निपदपरित्यागेनोक्तयागत्रयात्मकपूर्णमासे पठनीयम् । तथा सतीदं हविरित्यादिमंत्रभागानां दर्शपूर्णमासशेषत्वबोधकदर्शपूर्णमासप्रकरणपाठेनुगृहीतो भवतीति पूर्वपक्षे राद्धान्तः। अग्नीषोमपदघटितमंत्रभागस्येदं हविरित्यादिरूपस्येंद्राग्निपदान्वयाश्रवणात्प्रकरणेन प्रथमं शेषशेषिवाचकपदानां सहोच्चारणरूपं वाक्यं कल्प्यते वाक्येन त्वग्नीषोमपदघटितमंत्रभागस्येदं हविरित्यादेरिन्द्राग्निप्रकाशनसामर्थ्यरूपं लिंगं कल्प्यते लिंगेन चानेनेनेदं हविरित्यादिनाऽग्नीषोममंत्रभागेनेंद्राग्निविषयकस्तुतिं कुर्य्यादिति श्रुतिः कल्पनीया एवमिंद्राग्निपदघटितमंत्रशेषस्याप्यग्नीषोमपदान्वयाश्रवणात्प्रकरणेन प्रथमं शेषशेषिवाचकपदानां सहोच्चारणरूपवाक्यं कल्पनीयमुक्तवाक्येन चेंद्राग्निमंत्रभागस्येदंहविरित्यादेरग्नीषोमदेवताप्रकाशनसामर्थ्यरूपं लिंगं कल्पनीयं लिंगेन त्विंद्राग्निमंत्रभागेनेदं हविरित्यादिनाऽग्नीषोमविषयकस्तुतिं भावयेदिति श्रुतिः कल्पनीयेति प्रकरणेन विनियोगे प्रकरणं श्रुत्यादित्रिभिर्व्यवधीयते वाक्येनविनियोगेत्वग्नीषोमपदसमभिव्याहाररूपवाक्यस्य श्रूयमाणत्वादुक्तवाक्यंश्रुतिलिंगाभ्यामेवव्यवधीयते इति प्रकरणस्य वाक्येन बाधितत्वात्तत्तद्देवतावाचकपदशेषो दर्शादिषु यथायोग्यं व्यवस्थित इति अत्रापि मंत्रभागं विच्छिद्य दर्शादिष्वप्रयोगे आकांक्षाविरह एव कारणमिति ॥

**शि० म०-विदेवनादीनामभिषेचनीयसन्निधावाम्नातानामपि प्रकरणाद्राजसूयांगत्वावगमेन निराकांक्षत्वान्न सन्निधानादभिषेचनीयांगत्वं पौरोडाशिकसमाख्याते दर्शपूर्णमासकांडे समाम्नातस्य शुंधध्वमिति मंत्रस्य सन्निधानात्सानाय्यपात्रांगत्वेनान्वितस्य निराकांक्षत्वान्न पुरोडाशपात्रांगत्वमिति समाख्यायास्ततो दौर्बल्यम् ॥**

म० प्र०-स्थानप्रकरणविरोधे स्थानदौर्बल्योदाहरणमाह ( विदेवनादीनामिति ) अत्र विदेवनशब्दो लोके जूआ इति ख्यातस्य वाचकः अत्रादिपदेन जयशुनाशेपाख्यानयोर्ग्रहणं राजसूययागे हि पश्विष्टिसोमयागादयो बहवो यागा उक्तास्तत्राभिषेचनीयसंज्ञकसोमयागस्तथाचाभिषेचनीयसंज्ञकसोमयागसन्निधौ पठितानामपि विदेवनादीनां प्रकरणप्रमाणाद्राजसूयांगत्वनिश्चयेनेत्यर्थः । अयमाशयः अक्षैर्दीव्यति राजन्यं जिनाति शौनाशेपमाख्यापयतीति बह्वृचब्राह्मणे श्रूयते राजन्यं-राजानं जिनाति-जयेत् शुनाशेपविषय आख्यानं शौनाशेपमिति तदर्थः । तत्र-किं विदेवनादयः सर्वराजसूयांगमुत राजसूयांतर्गताभिषेचनीयसंज्ञकसोमयागांगमिति संशये सन्निधिपाठरूपस्थानप्रमाणाद्विदेवनादयोऽभिषेचनीयसंज्ञकसोमयागांगमेवेति पूर्वपक्षे राद्धांतः राजसूययागस्य कथंभावाकांक्षायां विहितविदेवनादयः प्रकरणप्रमाणेन राजसूययागशेष एव राजसूययागश्च बहुयागात्मक इति तत्रत्य-

सर्वयागशेषा एव नत्वभिषेचनीयसंज्ञकसोमयागमात्रस्य शेषाः अभिषेचनीयसंज्ञकसोमयागस्य ज्योतिष्टोमविकृतित्वेनातिदिष्टप्राकृतांगैरेव कथंभावाकांक्षानिवृत्तेरभिषेचनीयस्य विदेवनादिषु कथंभावाकांक्षाभावादिति स्थानसमाख्याविरोधे समाख्यादौर्बल्योदाहरणमाह ( पौरोडाशिकसमाख्यातेइति ) पुरोडाशं कपालोपरिपक्वान्नविशेषमधिकृत्य प्रवृत्तं कांडं मंत्रवृंदं पौरोडाशिकं पौरोडाशिकशब्दरूपसमाख्यावाच्येदर्शपूर्णमासकांडे दर्शपूर्णमाससंबंधिमंत्रवृंदे इत्यर्थः । सन्निधानात्-स्थानप्रमाणात् । सान्नाय्यपात्रांगत्वेन–दधिदुग्धपात्रशेषत्वेनायं भावः । पौरोडाशिकसमाख्याते दर्शपूर्णमासकांडे शुंधध्वं दैव्याय कर्मणे इत्यादि मंत्रः पठ्यते तत्र स मंत्रः किं पुरोडाशपात्रांगमुतसांनाय्यशब्दवाच्यदधिदुग्धपात्रांगमिति संशये पौरोडाशिकामितिं समाख्याते कांडेस्यमंत्रस्य पठितत्वात् पुरोडाशपात्रांगमेवायं मंत्रइति पूर्वपक्षे राद्धांतः प्रवर्त्तते पौरोडाशिकसमाख्यायां प्रकृतिः पुरोडाशमभिधत्ते तद्धितप्रत्ययश्च कांडंनचैतावता कृत्स्नपुरोडाशपात्राणां सन्निधिरत्र प्रत्यक्षः किंत्वर्थात् प्रकल्प्यस्तेन सन्निधिना पुरोडाशपात्रसन्निध्यन्यथानुपपत्त्या परस्पराकांक्षारूपकृत्स्नपुरोडाशपात्रप्रकरणं प्रकरणेनवाक्यं वाक्येनलिंगंलिंगेन श्रुतिं कल्पयित्वा पुरोडाशपात्रेषु मंत्रस्य विनियोग इति समाख्यया विनियोगे स्थानादिपंचभिर्विप्रकर्षः सान्नाय्यपात्राणां शोधनमंत्रेण सन्निधिस्तु प्रत्यक्षः इध्मा बर्हिः संपादनस्य मुष्टिनिर्वापस्य चांतराले सान्नाय्यपात्राण्युक्तानि मंत्रश्चायामिध्माबर्हिर्निर्वापविषययोर्मंत्रानुवाकयोर्मध्यमेनुवाके पठ्यते तेन प्रत्यक्षसन्निधिना प्रकरणादीनां साक्षात्परंपरयाच चतुर्णां कल्पनात्सन्निधिः प्रकरणादिचतुर्भिः सन्निकृष्यते तस्मात्स्थानप्रमाणेन समाख्यांबाधित्वा सानाय्यपात्रशेषएव मंत्र इति अत्रस्थानं सन्निधिः क्रम इत्यनर्थांतरम् इध्माशब्दो हि काष्ठवाचकः बर्हिः शब्दः कुशावाचक इति ॥

**शि० म०–तथाच सर्वत्रोक्तायाः आकांक्षायाः अभावः दुर्बलत्वप्रयोजकः नत्वजनितान्वयबोधत्वलक्षणाकांक्षाविरहः तस्याः सर्वत्राभावादिति भावः । अत्रेदमालोचनीयं जिज्ञासाविषयत्वयोग्यत्वं नाकांक्षा घटः कर्मत्वं आनयनं कृतिः अग्निः करणत्वं ओदनं कर्मता पाकः कृतिरिष्टसाधनमित्यत्र क्रियात्वादिस्तदवच्छेदकस्य सत्वेन साकांक्षत्वापत्तेः नचेष्टापत्तिः ततोप्यन्वयबोधप्रसंगात् स्वरूपायोग्यत्वान्नान्वयबोध इति चेन्न, साकांक्षत्वेनेव शब्दस्य स्वरूपयोग्यताया अप्यापातात्, किंचान्वयबोधोत्तरकालमपि पदार्थेषुयोग्यता लक्षणाकाक्षासत्वात्पुनरन्वयबोधापत्तिः नचान्वयबोधाभावसहकृतजिज्ञासाविषयत्वयोग्यत्वमाकांक्षेति विवक्षितमतो नोक्तदोष इति वाच्यम्, अन्वयबोधानंतरमनेन शब्देन पुन-**

जानीयामितीच्छाया अन्वयबोधदर्शनात्, किंचैवमाकांक्षैव हेतुर्न-स्यात् अन्वयबोधाभावस्य प्रतिबंधकाभावतया पृथक्कारणत्वेन कारण-तावच्छेदकत्वायोगात् ॥

म० प्र०-( अजनितान्वयबोधत्वलक्षणेति ) अजनितोऽन्वयबोधो येन शब्देन शब्दार्थेन वा स तथा तस्य भावस्तत्त्वं प्रकृतान्वयबोधाजनकत्वस्वरूपेत्यर्थः। तस्याः-प्रकृतान्वयबोधाजनकत्वलक्षणाकांक्षायाः ( सर्वत्राभावादिति ) प्रकृतान्वय-बोधो वैश्वदेवयागेन वाजिनान्वयबोधस्तदजनकत्वं वैश्वदेवयागेवाजिनान्वयबोधा-त्पूर्वं वाजिनद्रव्येऽस्ति एवं प्रकृतान्वयबोध इन्द्रोपस्थानेनैन्द्र्या ऋचोऽन्वयबोध-स्तदजनकत्वमिन्द्रोपस्थाने ऐन्द्र्या ऋचोऽन्वयबोधात्पूर्वमैन्द्री मंत्रेऽस्तीति वाजिनादौ सर्वत्र सत्त्वादित्यर्थः। ततोपि-घटः कर्मत्वमित्यादि शब्दादपि। स्वरूपायोग्य-त्वात्-शाब्दबोधनिष्ठकार्य्यतानिरूपितशब्दनिष्ठकारणतावच्छेदकद्वितीयांतादिविलक्षणश ब्दत्वाभावात् ( पुनरन्वयबोधापत्तिरिति ) शंकाकर्तृनैयायिकमते त्वन्वयबोधोत्तर-कालेयोग्यतादीनांसत्त्वेप्यन्वयबोधाननुभावकत्वरूपाकांक्षाभावान्नपुनरन्वयबोधइतिभा-वः। अन्वयबोधाभावसहकृतेति-सामानाधिकरण्यसंबंधेनान्वयबोधाभावविशिष्टजि-ज्ञासाविषयत्वयोग्यत्वमित्यर्थः। नोक्तदोषः-विशेषणाभावेन विशिष्टाभावसत्त्वा-त्पुनरन्वयबोधापत्तिरूपदोषो न ( अन्वयबोधदर्शनादिति ) तवमते पूर्वोक्ताकांक्षा-भावेन पुनरन्वयबोधो न स्यादिति भावः। एवं-अन्वयबोधाभावसहकृतेति विशेष-णादानेसति। पूर्वोक्ताकांक्षायाः शाब्दबुद्धिं प्रति हेतुत्वं तदा स्याद्यद्यन्वयबोधा-भावस्य कारणतावच्छेदकत्वं स्यादन्वयबोधाभावस्य तु कारणतावच्छेदकत्वमेव नास्ति, यत्र स्वतंत्रकारणत्वं तत्र कारणतावच्छेदकत्वाभाव इति व्याप्तेरन्वयबोधः प्रतिबंधकस्तदाभावः करणमित्यन्वयबोधाभावस्य प्रतिबंधकाभावत्वेन स्वातंत्र्येणैव कारणत्वादित्यभिप्रेत्य न स्यादिति प्रतिज्ञायां हेतुमाह ( अन्वयबोधाभावस्येति ) ॥

शि० म०-अन्यथासिद्ध्यभावसहकृतसिषाधयिषाविषयत्वयोग्यत्वमे-वानुमितिहेतुः स्यात्तथाच सिषाधयिषाविरहसहकृतसिद्ध्यभावः पक्ष-तेति सिद्धान्तो भज्येत ततश्च न युक्तं जिज्ञासाविषयत्वयोग्यत्वमाकां-क्षेति अत्र ब्रूमः जिज्ञासाविरसहकृतान्वयबोधाभाव आकांक्षा अजि-ज्ञासितान्वयबोधके वाक्ये विशेष्याभावात्, जनितान्वयबोधे च विशेषणाभावात्, विशिष्टाभावसत्त्वेन नान्वयबोधानुपपत्तिः नचैवं घटः कर्मत्वमित्यादावपि तत्सत्त्वेनान्वयबोधापत्तिः क्रियाकर्मान्वयबोधवि-शेषे तादृशपदस्य स्वरूपायोग्यत्वात्। नच साकांक्षत्वेन तदप्यापाद्य-मित्युक्तमिति वाच्यम्। अन्वयबोधविशेषे पदविशेषत्वेनैव हेतुत्वात्,

**ननु अजिज्ञासितेपि वाजिनादौ विशेष्याभावसत्त्वेन साकांक्षत्वापत्तौ बलाबलाधिकरणोक्तं नैराकांक्ष्यं विरुद्धयेतेतिचेन्न, नहि नैराकांक्ष्यपदेन शाब्दज्ञानोपयोग्याकांक्षाभावस्तत्राभिप्रेतः किंतु श्रुतिकल्पनानुकूलजिज्ञासालक्षणाकांक्षाभावः ॥**

म० प्र०—अन्यथा—प्रतिबंधकाभावस्य कारणतावच्छेदकत्वस्वीकारे । ननु प्रतिबंधकाभावस्य स्वतंत्रकारणत्वानभ्युपगमरूपलाघवेन सिद्ध्यभावसहकृतसिषाधयिषाविषयत्वयोग्यत्वस्यानुमितिहेतुत्वमस्तु को दोष इत्याशंक्याह ( तथाचेति ) सिद्ध्यभावसहकृतसिषाधयिषाविषयत्वयोग्यत्वस्यानुमितिहेतुत्वस्वीकारे सतीत्यर्थः । ततश्च—उक्तदोषवृंदादेव ( जिज्ञासाविरहेति ) पदार्थानांयोन्वयस्तद्विषयिकावाक्यार्थयोर्योन्वयस्तद्विषयिका वा या जिज्ञासा तदभावविशिष्टो यः पदार्थवाक्यार्थान्यतरान्वयबोधः स शाब्दबुद्धिप्रतिबंधकस्तदभाव आकांक्षेत्यर्थः । अजिज्ञासितान्वयबोधके—मुमुक्षोरनिष्टान्वयबोधजनके गणिकावाक्यादौ ( विशेष्याभावादिति ) स्वजनकतासंबंधेनान्वयबोधरूपविशेष्याभावाद्विशिष्टाभावसत्त्वेनेत्यर्थः । विशेषणाभावात्—जिज्ञासाविरहरूपविशेषणाभावात् । तत्सत्त्वेन—विशेषणाभावेन वा विशेष्याभावेन वा विशेषणविशेष्योभयाभावेन वा विशिष्टाभावसत्त्वात्पूर्वोक्ताकांक्षासत्त्वेन क्रियाकर्मान्वयबोधविशेषे—घटमानयेत्यादिवाक्यजन्ये निरूपकतासंबंधेन घटकर्मतावदानयनमित्यादिबोधविशेषे । तादृशपदस्य—घटःकर्मत्वमित्यादिशब्दस्यतदपि—स्वरूपयोग्यत्वमपि, अन्वयबोधविशेषे—निरूपकतासंबंधेन कर्मतावदानयनमित्यन्वयबोधविशेषे । पदविशेषत्वेन—द्वितीयांतपदाव्यवहितोत्तरानयपदत्वेन ( अजिज्ञासितेपीति ) वैश्वदेवयागे आमिक्षाया अन्वितत्वेन वैश्वदेवयागस्याजिज्ञासिते वाजिनादौ जिज्ञासाविरहरूपविशेषणसत्त्वेपि वैश्वदेवयागेन वाजिनान्वयबोधरूपविशेष्याभावेन विशेष्याभावप्रयुक्तविशिष्टाभावसत्त्वे वाजिनादौ साकांक्षत्वापत्त्या नैराकांक्षमनुपपन्नं भवेदित्यर्थः । तत्र—वाजिनादौ ( श्रुतिकल्पनानुकूलेति ) वाजिनस्य विश्वदेवशेषत्वबोधिका का श्रुतिरैन्द्री ऋच इंद्रशेषत्वबोधिका का श्रुतिरित्येवं श्रुतिकल्पनाजनकजिज्ञासालक्षणाकांक्षाभावो वाजिनादिनिष्ठो नैराकांक्ष्यशब्देनाभिहित इत्यर्थः ॥

**शि० म०—अन्यथाऽशब्दरूपे लिंगे प्रकरणादौ नैराकांक्ष्यवचनमसमंजसं प्रसज्येत, नच वाक्यस्य श्रुतिवत्प्रामाण्यात्र श्रुतिकल्पनापेक्षा येन तदुपयोग्याकांक्षाभावपरोनैराकांक्ष्यशब्दः स्यादिति वाच्यम् । चोदनालक्षणोऽर्थो धर्म इति धर्मस्य श्रुतिप्रमाणत्वव्यवस्थापनेन सर्वत्र श्रुतेरेव विनियोजकत्वात् । तदुक्तं बलाबलाधिकरणे भट्टपादैः ॥**

विनियोक्त्री श्रुतिस्तावत्सर्वेष्वेतेषु सुस्फुटा ॥
धीस्तस्याः सन्निकर्षेण विप्रकर्षेणचस्थितेति ॥

ननु नैराकांक्षस्यानुमित्यर्थापत्त्योरदोषतया श्रुतिकल्पनाप्रतिबंधकत्वाभावाच्छाब्दज्ञानानुकूलाकांक्षाभावपर एव नैराकांक्ष्यशब्दस्तत्रेति चेत्सत्यम् ॥

म० प्र०–अन्यथा–नैराकांक्ष्यशब्देन शाब्दज्ञानोपयोग्याकांक्षाभावस्वीकारे ( असमंजसंप्रसज्येतेति ) प्रसक्तं हि प्रतिषिध्यते इति न्यायात्कस्मिँश्चिल्लिंगे प्रकरणादौ च शाब्दज्ञानोपयोग्याकांक्षाप्रसक्त्यभावेन कस्मिंश्चिल्लिंगे प्रकरणादौ च नैराकांक्ष्यवचनमनुपपन्नं स्यादिति भावः ( वाक्यस्येति ) यथाश्रुतेरज्ञातज्ञापकत्वरूपप्रामाण्यमितरनिरपेक्षंतद्वद्वाक्यस्यापि शब्दत्वाविशेषादितरनिरपेक्षाज्ञातज्ञापकत्वरूपप्रामाण्यान्न श्रुतिकल्पनापेक्षा, येन श्रुतिकल्पनापेक्षावस्त्वरूपहेतुना तदुपयोग्याकांक्षाभावपरः श्रुतिकल्पनाजनकाकांक्षाभावपरोनैराकांक्ष्यशब्दःस्यादित्यर्थः । चोदनालक्षणः–चोदनाविधिः लक्षणं प्रमाणं यस्मिन् धर्मे स तथा विधिप्रमाणक इति यावत् अर्थः–सुखाधिकदुःखाजनकः, श्रुतिप्रमाणत्वव्यवस्थापनेन–विधिप्रमाणकत्वनिरूपणेन । सर्वत्र–निखिलशेषेषु श्रुत्यादिषड्विधसर्वप्रमाणेषु मध्येइति वा ( विनियोक्त्रीति ) यतस्तस्याः श्रुतेर्धीर्ज्ञानं सन्निकर्षेण–साक्षाद्विप्रकर्षेण–व्यवहितत्वेन लिंगादिकल्पनानंतरंश्रुतिकल्पनया स्थितमतः सर्वेष्वेतेषु श्रुत्यादिनिखिलप्रमाणेषु मध्ये श्रुतिरेव विनियोक्त्रीत्यर्थः । शब्दज्ञानानुकूलाकांक्षाभावपरनैराकांक्ष्यशब्दांगीकारेऽशब्दरूपलिंगप्रकरणादौ नैराकांक्ष्यवचनं व्यर्थं स्याल्लिंगप्रकरणादावुक्तनैराकांक्ष्यस्यसर्वदासत्त्वादेतादृशनैराकांक्ष्यस्य सर्वदा सत्त्वेन कदापि लिंगादिनाश्रुतिकल्पनाच न स्यात्तथाच लिंगप्रकरणादौविनियोजकत्वमपि न स्यादित्यन्यथेत्यादिग्रंथनिर्दिष्टपूर्वोक्तदोषमुद्धर्तुकामः शंकते ( नन्विति ) अनुमित्यर्थापत्त्योः–स्योनंते सदनं कृणोमीत्यादिमंत्रः अनेन मंत्रेण पुरोडाशसदनं कुर्यादिति श्रुतिविहितपुरोडाशसदनकरणशेषत्ववान् मंत्रत्वे सतिशेषत्वप्रकाशनेसमर्थत्वाद्यन्नैवं तन्नैवं घटादिवत् । यदि स्योनंते सदनं कृणोमीत्यादि मंत्रनिष्ठपुरोडाशसदनकरणशेषत्वबोधिकाश्रुतिर्नस्यात्तदैतन्मंत्रनिष्ठपुरोडाशसदनकरणशेषत्वप्रकाशनसामर्थ्यं व्यर्थं स्यादित्येतन्मंत्रनिष्ठपुरोडाशसदनकरणशेषत्वप्रकाशनसामर्थ्यमेतन्मंत्रनिष्ठपुरोडाशसदनकरणविनियोगं बोधयंतीं श्रुतिमंतरेण व्यर्थं सदुक्तमंत्रस्य पुरोडाशसदनकरणे विनियोजिकां श्रुतिं कल्पयतीत्यनुमित्यर्थापत्तिरूपयोः श्रुतिकल्पनयोः ( तत्रेति ) लिंगप्रकरणादावित्यर्थः । लिंगादिषु शाब्दज्ञानानुकूलाकांक्षाभावरूपनैराकांक्ष्यस्य सर्वदासत्त्वेपि तादृशनैराकांक्ष्यस्य शाब्दज्ञानप्र-

तिबंधकत्वेन श्रुतिकल्पनारूपानुमित्यर्थापत्त्यप्रतिबंधकत्वेन पुरुषेच्छयाश्रुतिकल्पनासंभवेन कल्पितश्रुतिसहकृतलिंगप्रकरणादीनांविनियोजकत्वसंभवेनान्यथेत्यादिपूर्वग्रंथोक्तदोषो नास्तीति शंकाकर्तुराशयः ॥

शि० म०-नैराकांक्ष्यं न दोष इति तथापि न कल्पिताश्रुतिर्विनियोजिका नैराकांक्ष्योत्तरकालंकल्पितस्य वचनस्य पौरुषत्वेनाप्रमाणत्वात् तदुक्तंमंत्राधिकरणे "निराकांक्ष्योत्तरकालं कल्पितमपि पौरुषेयत्वादप्रमाणं स्यात्" इति इयंचाकांक्षा स्वरूपसती हेतुः। नन्वियं पक्षतापर्यवसन्नेति कथं शाब्दज्ञानासाधारणकारणमिति चेत् न, तावद्विशेषणसंकरः। तत्र ह्यनुमितिगोचरेच्छासिषाधयिषा जिज्ञासातुशाब्दज्ञानेच्छा अनेन शब्देनासुमर्थं जानीयामित्येवंरूपा नाप्यन्वयबोधाभावः साधारणमनुमितौ हि सिद्धिमात्रस्य प्रतिबंधकत्वात् सिद्ध्यभावमात्रं हेतुः शाब्दज्ञाने तु तज्जन्यशाब्दज्ञानाभावः प्रमाणांतरेण वाक्यांतरेण वाऽवगतेपि वाक्यार्थज्ञानोत्पत्त्या फलबलेन तज्जन्यशाब्दज्ञानस्यैव प्रतिबंधकत्वात् ॥

म० प्र०-नदोषः-अनुमित्यर्थापत्त्योर्दोषो न, वचनस्य-श्रुतिवचनस्य ( अप्रमाणत्वादिति ) यद्यपि लिंगप्रकरणादिषु शाब्दज्ञानोपयोग्याकांक्षाभावरूपनैराकांक्ष्यं न श्रुतिकल्पनाप्रतिबंधकमिति, सत्यं तथापि पुरुषेच्छया कल्पिता श्रुतिर्विनियोजिका न भवति लिंगप्रकरणादिषु शाब्दज्ञानानुकूलाकांक्षाभावरूपनैराकांक्ष्योत्तरकालं पुरुषेच्छया कल्पितश्रुतेः पौरुषेयत्वादप्रमाणत्वेन कल्पिताश्रुतिसहकृतनिराकांक्षलिंगादीनां विनियोजकत्वाभावेनान्यथेत्यादिपूर्वग्रंथोक्तदोषः पूर्वपक्षिणस्तदवस्थः मम तु लिंगप्रकरणादिषु श्रुतिकल्पनानुकूलजिज्ञासालक्षणाकांक्षायाः सत्त्वेन साकांक्षलिंगादिमूलककल्पनाविषयश्रुतेः प्रमाणत्वेन प्रमाणश्रुतिद्वारा लिंगप्रकरणादीनां विनियोजकत्वसंभवेन लिंगप्रकरणादीनां श्रुतिकल्पनाद्वारा विनियोजकत्वाभावरूपे दोषो नास्तीति सिद्धांतिन आशयः, कल्पितमपि-कल्पितश्रुतिवचनमपि, इयं-जिज्ञासाविरहसहकृतान्वयबोधाभावरूपाकांक्षा, पक्षतापर्यवसन्ना-सिषाधयिषाविरहविशिष्टसिद्ध्यभावरूपपक्षतारूपा, इति-जिज्ञासाविरहसहकृतान्वयबोधाभावरूपाकांक्षाया:उक्तपक्षतारूपत्वात्, तत्र-सिषाधयिषाविरहविशिष्टसिद्ध्यभावरूपपक्षतायाम् सिद्धिमात्रस्य साध्यनिश्चयत्वावच्छिन्ननिखिलसाध्यनिश्चयस्य, सिद्ध्यभावमात्रम्-साध्यनिश्चयाभावत्वावच्छिन्नसाध्यनिश्चयाभावः, तज्जन्यशाब्दज्ञानाभावः-प्रकृतशब्दजन्यशाब्दज्ञानाभावः अस्यहेतुरित्यनेनान्वयः ( प्रमाणांतरेणेति ) प्रत्यक्षादिप्रमाणेन कलशवद्भूतलमित्यादिवाक्येन वा घटभूतलादिपदार्थज्ञानेपि पुनः केनचिद्घटवद्भूतलमित्यादिवाक्योच्चारणे कृते उच्चरित-

वाक्यार्थज्ञानोत्पत्त्या फलबलेन शाब्दज्ञानरूपकार्यानुपपत्त्या प्रकृतशब्दजन्यतद्विशेष्यकतत्प्रकारकशाब्दबोधं प्रति प्रकृतशब्दजन्यतद्विशेष्यकतत्प्रकारकशाब्दज्ञानस्यैव प्रतिबंधकत्वादित्यर्थः ॥

**मू०—योग्यता च तात्पर्य्यविषयसंसर्गाबाधः वह्निना सिंचेदित्यादौ तादृशसंसर्गबाधान्नातिव्याप्तिः स प्रजापतिरात्मनो वपामुदखिददित्यादावपि तात्पर्य्यविषयीभूतपशु ( वपायाग ) प्राशस्त्याबाधात् योग्यता। तत्त्वमस्यादिवाक्येष्वपि वाच्याभेदबाधेपि लक्ष्यस्वरूपाभेदे बाधाभावाद्योग्यता ॥**

**शि० म०**—नचैवमन्वयबोधाभावस्य प्रागभावरूपतया नासाधारण्यं तत्तत्प्रागभावत्वेन साधारण्येपि विशेषणांतरविशिष्टतया तस्यासाधारणत्वात् तस्माज्जिज्ञासाविरहसहकृतान्वयबाधाभाव एवाकांक्षा सैवच शाब्दज्ञानकारणमित्यास्तामतिविस्तरः । योग्यतां निरूपयति ( योग्यताचेति ) तात्पर्यविषयसंसर्गो योग्यतेत्यर्थः, तात्पर्य्यविषयपदस्य प्रयोजनमाह ( सप्रजापतिरित्यादिना ) संप्रदायमतेनाह ( वाच्याभेदबाधेपीति ) इयं योग्यता न स्वरूपसती हेतुः शाब्दभ्रमोच्छेदात् किंतु ज्ञायमाना तज्ज्ञानं च संशयनिश्चयसाधारणं कारणं ततश्च तत्संशयविपर्य्ययोर्न शाब्दज्ञानानुपपत्तिः । प्राभाकरास्तु न पदजन्यपदार्थोपस्थितिः शाब्दज्ञानांगं किंतूपस्थितिमात्रं लाघवात् ॥

**म० प्र०**—( नचैवमिति ) जिज्ञासाविरहविशिष्टान्वयबोधाभावरूपाकांक्षास्वीकारे नासाधारण्यम्—आकांक्षायाः शाब्दबोधमात्रकारणत्वं न स्यात्प्रागभावस्य कार्य्यत्वावच्छिन्ननिखिलकार्य्यं प्रति कारणत्वेनान्वयबोधाभावस्य प्रागभावरूपत्वादित्यर्थः। तत्तत्प्रागभावत्वेन—तस्य तस्य प्रत्यक्षादिरूपान्वयबोधस्य यः प्रागभावस्तस्य प्रागभावत्वेन, विशेषणांतरविशिष्टतया—जिज्ञासाविरहरूपविशेषणांतरविशिष्टत्वेन, तस्य—अन्वयबोधाभावस्य । असाधारणत्वात्—शाब्दबोधमात्रकारणत्वात् ( संप्रदायमतेनेति ) परममूलकर्तृधर्मराजाध्वरींद्रमते शक्त्युपस्थितविशेष्ययोरेवाभेदान्वयेन वाच्यार्थभेदबाधेपीत्युक्त्यनुपपत्त्यालक्षणाभ्युपगंतृप्राचीनमते वाच्यार्थाभेदबाधेपीत्याद्युक्तिसम्भवेन सम्प्रदायमतेनेत्युक्तमिति भावः ( शाब्दभ्रमोच्छेदादिति ) स्वरूपसत्त्याः योग्यतायाः शाब्दबोधहेतुत्वे वह्निना सिंचतीत्यादिवाक्याद्भ्रमात्मकशाब्दबोधो न स्याद्योग्यतायास्तत्राभावादित्यर्थः । साधारणम्—अन्यतरत् । तत्संशयविपर्ययोः—योग्यतासंशययोग्यतानिश्चयभ्रमान्यतरयोः

सतोः, पदजन्यपदार्थोपस्थितिः—एकसंबंधिज्ञानमपरसंबंधिस्मारकमितिन्यायेन शक्तिलक्षणान्यतरसंबंधेन पदजन्यपदार्थस्मृतिः । उपस्थितिमात्रम्—केनचिच्चक्षुरादिनिमित्तेन पदार्थज्ञानमात्रम् ॥

मू०-आसत्तिश्चाव्यवधानेन पदजन्यपदार्थोपस्थितिः ॥

शि० म०—नचासत्तेः पदविशेषजन्योपस्थितित्वेनाहेतुत्वे घटः कर्मत्वमित्यादावन्वयबोधप्रसंगः तस्य स्वरूपायोग्यत्वात् नचैवमोदनं पचतीत्यत्र मानान्तरोपस्थितकलापस्याप्यन्वयबोधापत्तिः तात्पर्य्यज्ञानेनैव तन्नियमोपपत्तेः अन्यथा दैववशस्मृतकलापपदोपस्थितस्य तवमतेप्यन्वयबोधापत्तिर्दुर्वारा किंच पदजन्यासा न शाब्दधीहेतुः, द्वारमित्यादौ व्यभिचारात्, ततश्च न पदजन्या पदार्थोपस्थितिरासत्तिरिति तदेतन्निराचष्टे ( आसत्तिश्चेति ) अयंभावः पदज्ञानजन्यान्वयप्रतियोग्युपस्थितिरेवासत्तिः सैवचान्वयबोधांगं अन्यथा संस्कारोपस्थितं तीरमादाय घोषादिपदैरेवान्वयबोधसंभवे लक्षणोच्छेदापत्तिः किंच यदि वृत्त्यानुपस्थितस्यान्वयबोधस्तदा समवायसंबंधेन घटादिपदैरेवाकाशोपस्थितिसंभवादाकाशादिपदानां तत्र शक्तिः ॥

म० प्र०—तस्य—घटः कर्मत्वमित्यादिपदस्य ( एवमिति ) पदार्थोपस्थितेः पदविशेषकारणजन्योपस्थितित्वेन शाब्दबोधाहेतुत्वे, मानांतरोपस्थितकलापस्य—प्रत्यक्षादिप्रमाणांतरज्ञातस्य "कलापः संहतौ बर्हे कांच्यां भूषणतूणयोः" इति मेदिनीकोशोक्तसंहत्यादिपदार्थकलापस्योदनं पचतीति वाक्यादन्वयबोधापत्तिरित्यर्थः । तन्नियमोपपत्तेः—तस्य कलापान्वयबोधस्य नियमो नियमनं निवारणं तस्योपपत्तेः, अन्यथा—तात्पर्य्यज्ञानेन कलापान्वयबोधनिवारणानंगीकारे, उपस्थितस्य—स्मृतकलापस्य, सा—पदार्थोपस्थितिः, द्वारमित्यादौव्यभिचारात्—पिधानपदजन्यपिधानोपस्थित्यभावेपि पिधानरूपार्थाध्याहारेण द्वारमितिशब्दाच्छाब्दबोधसंभवेन व्यतिरेकव्यभिचारात्, तदेतत्—प्रभाकरोक्तम् । परममूले ( अव्यवधानेनेति ) अव्यवधानविशिष्टा या पदजन्यपदार्थोपस्थितिः सा आसत्तिरव्यवधानविशिष्टंयत्पदं तज्जन्यपदार्थोपस्थितिरासत्तिरिति तु न गिरिर्भुक्तं वह्निमान् देवदत्तेनेत्यादौ गिरिभुक्तपदयोरव्यवधानसत्त्वेनातिव्याप्तेः, किंच मौनिकृतरेखासु पदाभावेन पदाव्यवधानासंभवादासत्त्यभावप्रसंगादव्यवधानवैशिष्ट्यस्य पदार्थोपस्थितावेवान्वय इत्यर्थः ( पदज्ञानेति ) पदज्ञानजन्याव्यवधानेनान्वयनिरूपकपदार्थोपस्थितिरित्यर्थः । सैव—उक्तासत्तिरेव, अन्वयबोधांगम्—वाक्यार्थबोधकारणम्, अन्यथा—शक्तिलक्षणान्यतररूपवृत्तिधीसहकृतपदज्ञानजन्यान्वयनिरूपकपदार्थोपस्थितिरूपा-

सत्तेर्वाक्यार्थज्ञानकारणत्वानंगीकारेपदार्थज्ञानमात्रस्य वाक्यार्थज्ञानकारणत्वांगीकारे वा, समवायसंबंधेन—घटादिपदानामाकाशे समवायसंबंधसत्त्वेन आकाशादीत्यादिपदेन गगनादिपदानां ग्रहः तत्र—आकाशे ॥

**मू०—मानांतरेणोपस्थापितपदार्थस्यान्वयबोधाभावात्पदजन्येति । अत एवाश्रुतपदार्थस्थलेतत्तत्पदाध्याहारः द्वारमित्यादौ 'पिधेहि' इति अत एव 'इषेत्वा' इत्यादौ 'छिनद्मि' इति पदाध्याहारः ॥**

शि० म०—न कल्प्येत नच वृत्तिधीरपि शाब्दधीहेतुः, लाघवेन पदजन्यपदार्थोपस्थितित्वेन हेतुत्वे अतिरिक्तकारणाकल्पनादिति यदुक्तं द्वारमित्यादौ व्यभिचार इति तत्राह ( अतएवेति ) नचार्थविशिष्टपदकल्पनाद्वारमावश्यकार्थकल्पनमिति वाच्यम् । उक्तन्यायेन पदजन्यपदार्थोपस्थितित्वेन हेतुत्वसिद्धौ तत्कल्पनागौरवस्य प्रामाणिकत्वेनादोषत्वात । अन्यथा पिधानांशे शाब्दत्वं न स्यात्, अनुमितित्वे परामर्शजन्यत्ववच्छाब्दत्वे पदज्ञानजन्यत्वस्य प्रयोजकत्वात् ( इषेत्वेत्यादाविति ) भेदलक्षणे स्थितं समेषु वाक्येभेदः स्यात् ॥

म० प्र०—( नकल्प्येतेति ) इदमुपलक्षणं वृत्त्यानुपस्थितस्याप्यन्वयबोधांगीकारे घटादिपदाद्घटादिपदानामाकाशे समवायसंबंधसत्त्वेनाकाशस्मृतौ घटमानयेत्यादिवाक्यादाकाशान्वयबोधापत्तिरिति दूषणमपि द्रष्टव्यम् । उक्तदोषद्वयं पूर्वपक्षी निराकरोति ( वृत्तिधीरपीति ) शक्तिलक्षणान्यतरज्ञानमपीत्यर्थः । तथाच घटादिपदानामाकाशे शक्तिलक्षणान्यतरज्ञानाभावेन घटमानयेत्यादिवाक्यान्नाकाशेशाब्दबोधापत्तिरिति भावः ( लाघवेनेति ) वृत्तिधियः स्वातंत्र्येण कारणत्वे गौरवं मम नयेतु वृत्तिधियः सहकारिकारणत्वान्न गौरवमिति भावः । अतिरिक्तकारणाकल्पनात्—आकांक्षाद्यतिरिक्तपदशक्तिज्ञानरूपशाब्दस्वतंत्रकारणाकल्पनात्, कल्पनात्—अनुमित्यर्थापत्तिरूपज्ञानात् । उक्तन्यायेन—लक्षणोच्छेदापत्त्याऽऽकाशादिपदानामाकाशेशक्तिकल्पनाभावरूपदूषणाभिधानेन च, तत्कल्पनागौरवस्य—यदि पिधेहीति पदं न स्यात्तदा द्वारकर्मकपिधानविषयकशाब्दबुद्धिर्नोत्पद्येतातः पिधानबोधकक्रियापदमावश्यकमित्यर्थापत्तिरूपार्थविशिष्टपदकल्पनारूपगौरवज्ञानस्यअदोषत्वात—कार्य्यकारणभावबुद्ध्यप्रतिबंधकत्वात्, अन्यथा—पिधेहिपदानध्याहारे । पदजन्येत्यस्यमानांतरोपस्थापितपदार्थान्वयबोधनिवर्त्तनरूपप्रयोजनमाह परममूले ( मानान्तरेणेति ) शब्दप्रमाणातिरिक्तप्रत्यक्षादिप्रमाणेनेत्यर्थः । परममूले ( अन्वयबोधाभावदिति ) अन्वयबोधाभावमभिप्रे-

त्येत्यर्थः । परममूले, अतएव-मानांतरेणोपस्थापितपदार्थस्यान्वयबोधाभावादेव परममूले, अश्रुतपदार्थस्थले-विवक्षिताश्रुतपदार्थलौकिकवाक्ये । परममूले ( तत्तत्पदाध्याहारइति ) अस्याग्रेसंगच्छतइतिशेषः मानांतरेणोपस्थापितपदार्थस्यान्वयबोधाभावादेवविवक्षिताश्रुतपदार्थवैदिकवाक्येप्यन्वययोग्यपदार्थोपस्थापकपदाध्याहारः संगच्छते इत्याह परममूले ( अतएवेति ) भेदलक्षणे-मंत्रभेदप्रतिपादकधर्ममीमांसाद्वितीयाध्यायेप्रथमपादे । स्थितं-सव्यवहितवक्ष्यमाणसूत्रंविद्यमानम्, समेषु-स्वातंत्र्येण प्रकृतार्थबोधकत्वेनतुल्यमंत्रेषु परस्परनिरपेक्षमंत्रेष्विति व वाक्यभेदः मंत्रभेदः ॥

**शि०म०-यान्यसमवेतार्थानि वाचनिकविनियोगवन्ति यथा इषेत्वोर्जेत्वेत्यादीनि तेषु संदेहः किं प्राग् दृष्टार्थमंत्रावधेरेकमंत्रत्वमुत यावदेव-मिथस्संबंधमिषेत्वेति तावदेकं यजुः अन्यत्तु यजुरंतरमिति किं प्राप्तमेकं यजुरिति कुतएकार्थत्वात् । नच निराकांक्षत्वान्नैकमंत्रत्वंसाकांक्षत्वे सत्येकप्रयोजनत्वस्यैवैकमंत्रत्वेतंत्रत्वादिति वाच्यम् । एकप्रयोजनानां प्रत्येकं तत्साधनशक्त्यभावेन विभज्यमानसाकांक्षत्वात् ॥**

म० प्र०-यानि-यादृशवाक्यानि। असमवेतार्थानि-ब्राह्मणभागेन विनियोगात्पूर्वं असमवेतः काचित्क्रियायामनन्वितोर्थोयेषां तान्यसमवेतार्थानि क्रियानन्वितार्थानीति यावत् । वाचनिकविनियोगवंति-वचनादिषेत्वेति शाखामाच्छिनत्तीत्यादि ब्राह्मणवाक्यादागतो वाचनिको वाचनिकश्चासौविनियोगः शाखाच्छेदनादिभिः सह संबंधस्तद्वंति तेषु तादृशमंत्रेषु एषुमंत्रेषु कर्मसमवेतार्थप्रकाशकनिर्वपामीत्यादिक्रियापदमस्ति तेषुपरिमाणसंशयाभावेपि यत्रेषेत्वोर्जेत्वेत्यादिषु क्रियापदाभावेन लौकिकविनियोगनिश्चयाभावाद्वाचनिकविनियोगोऽवगम्यते तेषु परिमाणसंशयइत्यभिप्रेत्यसंशयस्वरूपमाह ( किंप्रागित्यादिना ) संहितायामिषेत्वोर्जेत्वेत्यादिमंत्राणामग्रे इष्टार्थकैकमंत्रोस्ति स एवावधिस्तन्मंत्ररूपावधेः प्रागित्यर्थः । यावदेव-यत्परिमाणकम् । मिथस्संबंधम्-मिथः परस्परं संबंधो यस्य यजुषस्तन्मिथःसंबंधं परस्परसंबंधवदिति यावत्, इषेत्वेति-इषेत्वेत्याकारकम् । तावत्-तत्परिमाणकम्, एकंयजुः-एकमंत्रः । अन्यत्तु-ऊर्जेत्वेत्याकारकंतु, यजुरंतरम्-मंत्रांतरम् । एकंयजुः-इष्टार्थमंत्रावधेः प्रागिषेत्वोर्जेत्वेत्यादिपदसमुदाय एकमंत्रः । एकार्थत्वात्-एकादृष्टरूपप्रयोजनकल्पने लाघवेनादृष्टरूपैकप्रयोजनकत्वात् ऊरुप्रथस्वेत्यादिमंत्रवदिषेत्वेत्यादिषु क्रियापदाभावेनेषेत्वेत्यादिमंत्रार्थप्रतीत्यभावादिषेत्वेत्यादीनामनुष्ठेयार्थस्मारकताऽसंभवेन नानेकमंत्रत्वमिति भावः । हे पुरोडाश ऊरु यथा स्यात्तथा, प्रथस्व-वृद्धिमाप्नुहीति ऊरुप्रथस्वमंत्रार्थः । निराकांक्षत्वात्-इषेत्वेत्यादीनां भिन्नप्रयोजनकत्वेन परस्पराकांक्षाशून्यत्वात् नन्विषेत्वेत्यादीनां निराकांक्षत्वेप्येकमंत्रत्वमस्तु को दोषः इत्याशंक्याह ( साकांक्षत्वेसतीति )

तंत्रत्वात्–प्रयोजकत्वात् इषेत्वेत्यादीनामदृष्टप्रयोजनकत्वेन परस्परसाकांक्षत्वेन निराकांक्षत्वमसिद्धमित्यभिप्रेत्य नचवाच्यमिति प्रतिज्ञायां हेतुमाह ( एकप्रयोजनानामिति ) एकप्रयोजनकानांमंत्राणां मध्ये। प्रत्येकम्–एकैकमंत्रस्य। तत्साधनशक्त्यभावेन–एकादृष्टरूपार्थसंपादनसामर्थ्याभावेन विभज्यमानानां सतां वाक्यानां साकांक्षत्वादित्यर्थः। वाक्यानां विभागे सति साकांक्षत्वनिर्णयो भवतीति भावः॥

शि० म०–नन्वसिद्धमेकप्रयोजनत्वं विनियोगभेदेन प्रयोजनभेदावगमात। अन्यथा एकमंत्रत्वे प्रतीकभेदेन विनियोगभेद इषेत्वेति शाखामाच्छिनत्ति ऊर्जेत्वेत्यनुमार्ष्टीत्येवमादिः कथं स्यादिति चेत किमर्थाभिधानलक्षणप्रयोजनस्य भेदः उतादृष्टलक्षणस्य नाद्यः। वायवः स्थ इत्यादिवदिषेत्वेत्यादावश्रुतक्रियापदे तदयोगात। नच क्रियापदाध्याहारादर्थाभिधानभेद इति वाच्यम्। तत्र तदध्याहारकल्पनेगौरवान्मानाभावाच्च न द्वितीयः, कल्पनीयादृष्टस्य लाघवादेकस्यैव कल्प्यत्वात्। नच प्रतीकभेदेन विनियोगभेदानुपपत्तिः। मंत्रावृत्त्याऽपि तदुपपत्तेः। ततश्च मंत्रैक्यमित्येवमुत्सूत्रे पूर्वपक्षे प्राप्ते ब्रूमः। इषेत्वेत्येकं यजुः। ऊर्जेत्वेत्यपरमिति युक्तं शब्दभेदेन भिन्नवाक्यरूपावगमेन निराकांक्षत्वात। यत्त्वेकप्रयोजनत्वाद्विभज्यमानसाकांक्षत्वमिति तन्न॥

म० प्र०–एकप्रयोजनत्वम्–इषेत्वेत्यादिवाक्यानामदृष्टरूपैकप्रयोजनकत्वम्। विनियोगभेदेन–शाखाच्छेदनादिभिः सहसंबंधभेदेन, अन्यथा–इषेत्वेत्यादीनामेकादृष्टरूपप्रयोजनकत्वस्वीकारे, प्रतीकभेदेन–इषेत्वेत्यादिरूपमंत्रबोधकेतिशब्दघटितशब्दविशेषेण। इत्येवमादिः–इत्येवमादिब्राह्मणवाक्यबोधितः ( अर्थाभिधानेति ) कर्मसमवेतार्थविषयकबोधजननेत्यर्थः ( वायवइति ) भोवायवो यूयंस्थितिं कुरुथेत्यर्थः। तदयोगात्–कर्मसमवेतार्थाभिधानलक्षणदृष्टप्रयोजनकत्वायोगात्, तत्र–इषेत्वेत्यादिमंत्रेषु ( तदध्याहारेति ) क्रियापदानुमित्यर्थापत्त्यन्यतरात्मकाध्याहारेत्यर्थः मंत्रावृत्त्या–इषेत्वेत्याद्येकमंत्रस्य पुनः पाठेन। तदुपपत्तेः–शाखाच्छेदनादौ संबंधविशेषोपपत्तेः। उत्सूत्रे–सूत्राद्बहिरुत्सूत्रं तस्मिन्सूत्रानुक्ते इति यावत् ( इषेइति ) हे शाखे इषेऽन्नाय त्वा त्वां छिनद्मीत्यर्थः। एकंयजुः–एकमंत्रः। शब्दभेदेन–इषेत्वेतिशाखामाच्छिनत्तीत्यादिविनियोजकब्राह्मणवाक्यभेदेन। भिन्नवाक्यरूपागमेन–इषेत्वेतिभिन्नं वाक्यमूर्जेत्वेतिभिन्नं वाक्यमिति भेदविशिष्टवाक्यानां स्वरूपनिश्चयेन ( निराकांक्षत्वादिति ) इषेत्वेत्यादीनां परस्पराकांक्षाभावादित्यर्थः। पूर्वपक्षिणैकप्रयोजनानामित्यादिवाक्येनेषेत्वेत्यादिवाक्यानां साकांक्षत्वमेकादृष्टप्रयोजनकत्वं चोक्तं तन्निराकरोति ( यत्त्विति )॥

मू०-अतएव विकृतिषु सूर्य्यायजुष्टं निर्वपामीति पदप्रयोगः ॥

शि० म०-प्रथममेव रूपभेदेन विनियोगप्रयोजनभेदासिद्धौ तदुत्तरकालीनस्य प्रयोजनकल्पनागौरवस्य तद्भेदापरिपन्थित्वात् । नच मंत्रभेदस्यादृष्टभेदेप्युपपत्तेः । कथमेतावताच्छिनद्मि अनुमाज्मीति क्रियापदाध्याहारसिद्धिरिति वाच्यम् । करणत्वेन चोदितेषु मंत्रेषु कल्पनीयस्यप्रयोजनस्य क्रियानिर्वर्त्तनोपायस्यैव कल्प्यत्वेनार्थप्रकाशनस्यैव तत्कार्यत्वकल्पनात् । तस्य च क्रियापदाध्याहारं विनानुपपत्तेः, यथाहुः । यावता विना चोदितकरणसामर्थ्यं नास्ति तावदनाम्नातमपि कल्पनीयं छिनद्मीत्यादीति ( विकृतिष्विति ) ॥

म० प्र०-प्रथममेव-इषेत्वेत्यादीनां शाखाच्छेदनादिविनियोगभेदशाखाच्छेदनाद्यर्थाभिधानलक्षणप्रयोजनभेदकल्पनागौरवज्ञानात्प्रथममेव । रूपभेदेन-इषेत्वेति शाखामाच्छिनत्तीत्यादिविनियोजकब्राह्मणवाक्यस्वरूपभेदेन, विनियोगप्रयोजनभेदसिद्धौ-इषेत्वेत्यादीनां शाखाच्छेदनादिविनियोगभेदशाखाच्छेदनाद्यर्थाभिधानलक्षणप्रयोजनभेदसिद्धौ विनियोगाभिन्नप्रयोजनभेदसिद्धाविति वा, तदुत्तरकालीनस्य-रूपभेदेनेषेत्वेत्यादीनां शाखाच्छेदनविनियोगभेदशाखाच्छेदनाद्यर्थाभिधानलक्षणप्रयोजनभेदसिद्ध्युत्तरकालीनस्य, प्रयोजनकल्पनागौरवस्यइषेत्वेत्यादीनां विनियोगप्रयोजनभेदकल्पनागौरवज्ञानस्य । तद्भेदापरिपंथित्वात्-विनियोगभेदप्रयोजनभेदसिद्ध्यप्रतिबंधकत्वात् । एतावता मंत्रभेदान्यथानुपपत्तिरूपहेतुना करणत्वेन, चोदितेषु-मंत्रो द्विविधः करणमंत्रोऽनुवादकमंत्रस्तयोर्मंत्रयोर्मध्ये करणमंत्रेषु ब्राह्मणवाक्येनछेदनादिक्रियाकरणत्वेन विहितेष्विषेत्वेत्यादिषु, कल्पनीयस्य-अनुमित्यर्थापत्त्यन्यतरात्मककल्पनायोग्यस्य । क्रियानिर्वर्त्तनोपायस्य-छेदनादिक्रियाजननानुकूलस्य, कल्प्यत्वेन-भट्टपादैर्बोधितत्वेन, अर्थप्रकाशनस्यैव-मंत्रार्थज्ञानस्यैव । तत्कार्य्यत्वकल्पनात्-मंत्रकार्य्यत्वप्रकारकानुमित्यर्थापत्त्यन्यतरात्मकज्ञानात् । तस्यच-मंत्रार्थज्ञानलक्षणमंत्रप्रयोजनस्य तु यावत्-यादृशशब्देन । चोदितकरणसामर्थ्यं-ब्राह्मणवाक्यविहितकरणमंत्रनिष्ठार्थप्रकाशनानुकूलसामर्थ्यम् । तावत्-तादृशशब्दस्वरूपम् । परममूले ( अतएवेति ) शब्दाध्याहारस्य प्रामाणित्वादेव, विकृतिषु-सौर्य्ययागादिषु सूर्य्याय जुष्टं निर्वपामीतिपदप्रयोगः-अग्नये त्वा जुष्टं निर्वपामि व्रीहिणां मेध सुमनस्यमान इति मंत्रयोरग्निपदव्रीहिपदस्थानेसूर्य्यपदनीवारपदप्रक्षेपसंभवेन सूर्य्यायजुष्टं निर्वपामिनीवाराणां मेधसुमनस्यमान इत्यनयोर्मंत्रयोः स्वरूपं सम्भवतीत्यर्थः ॥

शि० म०-अग्नये त्वा जुष्टं निर्वपामीति व्रीहीणां मेधस्सुमनस्यमान इति मंत्रावुदाहृत्य किमिमौ सौर्य्ययागादिषु ऊहितव्यावुत नेति संशये

ग्निव्रीहिपदयुक्तमंत्रयोर्द्रव्यदेवताप्रकाशकतया प्रकृतौ दृष्टार्थकयोरप्यैन्द्र्यागार्हपत्यप्रकाशकत्ववत नीवारसूर्य्यादिप्रकाशकत्वस्य गुणवृत्त्यैवोपपत्तेः। न तत्प्रकाशनार्थमूह इति प्रापय्याग्निव्रीहिपदयोर्देवतादिवाचिपदविवक्षया प्रयुक्तयोरैंद्रीवन्मंत्रस्वरूपाविवक्षया प्रकृतावप्रयुक्तया तत्स्थाने सूर्य्यनीवारपदप्रक्षेपो विकृताविति नवमे राद्धांतितं तथाचार्थाध्याहारपक्षे मानांतरोपस्थितसूर्य्यादिकमादाय मंत्रस्यान्वयबोधकत्वसंभवान्न सूर्य्यादिपदोहाप्राप्तिरित्येतदाधिकरणविरोधः स्यादितिभावः नन्वासत्तिः पदजन्यत्वविशेषितापि न शाब्दज्ञानेहेतुः। अनासन्नेतदुभ्रमेण शाब्दभ्रमाभावप्रसंगादिति चेत् न, तात्पर्य्यभ्रमेण वा योग्यताभ्रमेण तदुपपत्तेः॥

म० प्र०-( अग्नयेइति ) हे पुरोडाश अग्नये-अग्निदेवतायै त्वा-त्वांजुष्टं प्रीतिपूर्वकं यथास्यात्तथा, निर्वपामि--संपादयामि प्रक्षिपामीति वा व्रीहीणां मेधो भो व्रीहीणां सारसुमनस्यमानः-सुष्ठुप्रसन्नस्त्वंभवेत्यर्थः। उदाहृत्य-पठित्वा। ऊहितव्यौश्रुताग्न्यादिपदत्यागपूर्वकाश्रुतसूर्यादिपदांतरकल्पनरूपोहनव्यापारयोग्यौ, दृष्टार्थकयोः-द्रव्यदेवताज्ञानलक्षणदृष्टप्रयोजनकयोः ( ऐंद्र्याइति ) यथेंद्रपदस्येंद्रलक्षणार्थप्रकाशकत्वेपि गौण्यावृत्त्येंद्रसदृशगार्हपत्यसंज्ञकाग्निदेवताप्रकाशकत्वेनैंद्र्याः कदाचनस्तरीरसि नेंद्रसश्चसि दाशुषे इत्यृचो गार्हपत्यप्रकाशकत्वं तद्वदग्निपदव्रीहिपदयोरग्निव्रीहिलक्षणार्थप्रकाशकत्वेपि गौण्यावृत्त्या। सूर्य्यनीवारबोधकत्वसंभवेनाग्न्यादिपदघटितोक्तमंत्रयोरपि सूर्य्यनीवारबोधकत्वोपपत्तेरित्यर्थः। तत्प्रकाशनार्थम्-सूर्य्यादिज्ञानार्थम्। ऊहः-श्रुताग्न्यादिपदत्यागपूर्वकाश्रुताग्न्यादिपदस्थानीयसूर्य्यादिपदकल्पनम्। प्रापय्य--पूर्वपक्षं कृत्वा, ऐंद्रीवत्-ऐन्द्र्यामृचींद्रशब्दस्य श्रुतेंद्रपदातिरिक्तपदप्रक्षेपेणैंद्री विलक्षणस्वरूपं न स्यादित्यैंद्रीस्वरूपविवक्षया प्रयुक्तत्ववत्। तत्स्थाने-अग्न्यादिपदस्थाने ( विकृताविति ) विकृतिपठनीयाग्नयेत्वेत्यादिमंत्रयोरित्यर्थः। नवमे जैमिनिकृतधर्ममीमांसानवमाध्याये ( मंत्रस्येति ) किमिमावित्यादिपूर्ववाक्ये उभयोर्मन्त्रयोः प्रकृतत्वेन मंत्रयोरित्यर्थः। अन्वयबोधकत्वसंभवात्-सूर्य्यनीवाराद्यन्वयबोधकत्वसंभवात्। आसत्तिः-स्वरूपसत्यासात्तिः पदजन्यत्वविशेषितापि-पदजन्यत्वनिष्ठविशेषणतानिरूपितविशेष्यतावत्यपि अनासन्ने-आसत्तिशून्ययोर्गिरिर्भुक्तं वह्निमान् देवदत्तेनेत्यत्रगिरिवह्निमत्पदार्थयोर्भुक्तदेवदत्तपदार्थयोश्च। तद्भ्रमेण-आसत्तिभ्रमेण। शाब्दभ्रमाभावप्रसंगात्-पदार्थोपस्थितिरूपासत्तेः स्वरूपसत्त्याः शाब्दबोधहेतुत्वांगीकारेणासत्तिज्ञानस्य शाब्दबोधहेतुत्वानंगीकारादासत्तिभ्रमाच्छाब्दभ्रम इति प्राचीनगाथासिद्धशाब्दभ्रमाभावप्राप्तेः भ्रमात्मकशाब्दबोधं प्रति तात्पर्यभ्रमस्य योग्यताभ्रमस्य वा कारणतयोक्तप्राचीनगा-

थाया निर्युक्तिकत्वेनाश्रद्धेयत्वमित्यभिप्रेत्याह ( नेति ) तात्पर्य्यभ्रमेण गिरिर्भुक्तमिति पदयोः परस्परान्वययोग्यगिरिभुक्तपदार्थविषयकप्रतीतिजननयोग्यत्वमिति तात्पर्य्य-भ्रमेणयोग्यताभ्रमेणगिरिभुक्तपदार्थौपरस्परान्वययोग्याविवितियोग्यताभ्रमेण, तदुपपत्तेः—भ्रमात्मकशाब्दबोधोपपत्तेः अनासत्तेर्थे शाब्दबोध एव न भवति कचिद्भ्रमा-त्मकशाब्दबोधस्तु तात्पर्य्यादिभ्रमेणैव भवतीति भावः।

**सू०—पदार्थश्च द्विविधः शक्यो लक्ष्यश्चेति तत्र शक्तिर्नाम पदा-नामर्थेषु मुख्यावृत्तिः**

शि० म०—नचैवमासत्तेः स्वरूपसत्त्या हेतुत्वेविशेषणज्ञानत्वेन कारण-त्वापत्तौ शाब्दज्ञानासाधारणकारणत्वं न स्यादिति वाच्यम, पदज्ञानज-न्यपदार्थोपस्थितित्वेनैव हेतुत्वाभ्युपगमात् । अत एव विशेष्यधीरपि शाब्दधीहेतुरिति दिक् । केचित्तु गौणीवृत्तिविषयस्यापि पृथक्पदार्थतया तेन सह पदार्थस्य त्रैविध्यमिति तन्न गौण्या वृत्तेर्लक्षितलक्षणांतर्भावस्य वक्ष्यमाणतया तद्विषयस्य पदार्थस्य लक्ष्य एवांतर्भावादयुक्तमित्याशयेनाह ( पदार्थश्चेति ) पदनिष्ठवृत्तिविषय इत्यर्थः । ननु गौणस्य लक्ष्यांतर्भावे लक्ष्यस्यापि तदंतर्भावावश्यंभावात्तेन रूपेण विभागः किं न स्याद-विशेषादित्याशंक्य शक्यो गौणश्चेति विभागकरणे केवललक्षणाया गौण्यंतर्भावाभावेन लक्ष्यासंग्रहापत्तिरित्यभिप्रेत्याह ( शक्यइति ) शक्तिविषयत्वं शक्यत्वं तन्निरूपणाधीननिरूपणमित्यतस्तां निरूप-यति ( शक्तिर्नामेति ) लक्षणां व्यावर्तयति ( मुख्येति ) पदत-त्संबंधिमात्रनिरूप्येत्यर्थः ॥

म० प्र०—पदज्ञानजन्यपदार्थोपस्थितित्वेनैवेति—यथाघटत्वावच्छिन्नघटनिष्ठकार्य्य-तानिरूपितकपालनिष्ठकारणताकपालत्वावच्छिन्नैवनतुद्रव्यत्वाद्यवच्छिन्ना तथा शाब्द-बुद्धित्वावच्छिन्नशाब्दबुद्धिनिष्ठकार्य्यतानिरूपितपदज्ञानजन्यपदार्थोपस्थितिनिष्ठकारण-तापदज्ञानजन्यपदार्थोपस्थितित्वावच्छिन्नैव नतु विशेषणज्ञानत्वावच्छिन्नान्यथाविशेष्य-बोधकपदज्ञानजन्यविशेष्यधियः शब्दबुद्ध्यहेतुत्वापत्तिरिति भावः। अतएव—पदज्ञान-जन्यपदार्थोपस्थितित्वेनोपस्थितेः शाब्दबोधहेतुत्वादेव विशेष्यधीरपि—कर्मत्वादीनां ज्ञानमपि, पृथक्, पदार्थतया—शक्यलक्ष्यपदार्थाभ्यां भिन्नपदार्थत्वेन, तच्च—कैश्चिदु-क्तम्, तद्विषयस्य—गौणीवृत्तिविषयस्य। गौणस्य—गौण्या वृत्त्या ज्ञातो गौणः तस्य गौणीवृत्तिविषयस्य ( तदंतर्भावेति ) गौणांतर्भावेत्यर्थः । तेनरूपेण—शक्यो गौणश्चेति गौणत्वेन रूपेण। अविशेषात्—गौणलक्ष्ययोः परस्परांतर्भावस्य तुल्यत्वात् गौरवाभा-वस्य तुल्यत्वादिति वा, लक्ष्यासंग्रहापत्तेः—केवललक्षणालक्ष्यस्य गौणपदेनाग्रहणापत्तेः

( तन्निरूपणेति ) शक्तिनिरूपणेत्यर्थः । ताम्–शक्तिम् । परममूले ( तत्रेति ) शक्यलक्ष्ययोर्मध्ये शक्ये इत्यर्थः । वृत्तौ मुख्यत्वमेवाह ( पदतत्संबंधिमात्रनिरूप्येति ) एतत्पदस्यैतदर्थेशक्तिरिति पदपदार्थसंबंध्यर्थाभ्यामेव स्वरूपसंबंधविशेषलक्षणनिरूप्यत्वसंबंधवतीत्यर्थः । तथाच वृत्तित्वे सति पदपदार्थमात्रनिरूप्यत्वं शक्तित्वमिति भावः ॥

**मू०–यथा घटपदस्य पृथुबुध्नोदराद्याकृतिविशिष्टे वस्तुविशेषे वृत्तिः सा च शक्तिः पदार्थान्तरम्, सिद्धान्ते कारणेषु कार्य्यानुकूलशक्तिमात्रस्य पदार्थान्तरत्वात् ॥**

**शि० म०–लक्षणातु पदसंबंधिपदार्थांतरेणान्वयानुपपत्त्या च निरूप्येति नातिव्याप्तिः । प्राभाकरास्तु कार्य्यान्वित एवार्थे पदसामर्थ्यं नत्वितरान्विते केवले वा, तत्र पदानामज्ञातसंगतित्वादिति तदेतन्निराकरोति ( अर्थेष्विति ) विषयत्वं सप्तम्यर्थः । तथाचपदनिष्ठशक्तिः केवलार्थविषयिणीत्यर्थः । कार्य्यान्विते च शक्तिरग्रे निराकरिष्यते इति भावः । शक्तिस्संकेतस्सच सर्वेश्वरेच्छा अनेनपदेनेममर्थंजानीयादित्येवं रूपा नतु पदार्थान्तरं मानाभावादिति नैयायिकाः प्राहुः तान् प्रत्याह ( साचशक्तिरिति ) कैमुतिकन्यायमाह ( सिद्धांतइति ) नच कारणतावच्छेदकातिरिक्तशक्तौ मानाभावः दाहादिलक्षणकार्य्यानुपपत्तेरेवप्रमाणत्वात् । नच वह्निस्वरूपात्प्रतिबंधकाभावसहकृतात्तदुत्पत्तिः प्रतिबंधकाभावस्याभावतया अहेतुत्वात् ॥**

म०प्र०–( पदसंबंधीति ) गंगादिपदसंबंधिप्रवाहादिघोषादिपदार्थान्तरेत्येतदुभयनिरूपितान्वयानुपपत्तिनिरूप्या चकारेण गंगादिपदगंगादिपदलक्षणारूपसंबंधवत्तीरादिपदार्थनिरूप्येत्यर्थः । तथाच गंगादिपदगंगादिपदवाच्यार्थसंबंधितीरादिगंगादिपदवाच्यघोषादिपदार्थांतरान्वयानुपपत्तीति त्रितयनिरूप्यालक्षणेति भावः । कार्य्यान्विते–आनयनादिलक्षणकार्य्यसंबद्धे । इतरान्विते–क्रियेतरघटत्वादिसंबद्धे । केवले–इतरानन्वितशुद्धव्यक्तौ । तत्र–केवलेतरान्वितयोः ( केवलार्थेति ) कार्यानन्वितार्थेत्यर्थः । परममूले ( पृथुबुध्नोदराद्याकृतिविशिष्टेइति ) "बुध्नोगिरिशमूलयोः" इति हेमचंद्राभिधानादत्रबुध्नशब्दोऽधोभागवाचकः बुध्नंचोदरंच बुध्नोदरे पृथुनी चते बुध्नोदरे पृथुबुध्नोदरे पृथुबुध्नोदरे आदिर्येषामवयवानां तेपृथुबुध्नोदरादयः पृथुबुध्नोदरादिभिः सहिता आकृतिर्घटत्वादिजातिः पृथुबुध्नोदराद्याकृतिस्तया विशिष्टे इत्यर्थः । कार्येतरान्विते स्वमते शक्तिरिति भावः । परममूले ( साचेति ) कार्यानन्वितार्थविषयिणी पदनिष्ठात्वित्यर्थः । कैमुतिकन्यायम्–येषां मते शक्तिमात्रस्य पदार्थांतरता तेषां मते

पदनिष्ठा शक्तिः पदार्थान्तरमितिं किमुद्धक्तव्यमित्यादिवाक्यघटककिमुच्छब्दादागतः कैमुतिकः कैमुतिकश्चासौ न्यायः पदनिष्ठशक्तेः पदार्थान्तरत्वं कैमुतिकन्यायस्तं ( मानाभावइति ) दाहोत्पत्तौ वह्निः समर्थ इत्युक्तौ दाहनिष्ठकार्य्यतानिरूपितवह्निनिष्ठ-कारणतावच्छेदकवह्नित्वलक्षणसामर्थ्यमेव वह्नौ भाति नतु तदतिरिक्तशक्तिरिति भावः। तदुत्पत्तिः—दाहोत्पत्तिः, अहेतुत्वात्—दाहकारणताऽभावात् ॥

शि० म०—अनुमानमपि 'वह्निरद्दिष्टातींद्रियस्थितिस्थापकेतरभावाश्रयः गुणित्वात् घटवत्' ॥

न तस्यकार्य्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते ।
परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च ॥
शक्तयः सर्वभावानामचिंत्यज्ञानगोचराः ।
यतोऽतो ब्रह्मणस्तास्तु सर्गाद्याभवशक्तयः ॥
सर्वज्ञतातृतिरनादिबोधः स्वतंत्रता नित्यमलुप्तशक्तिः ।
इत्यादिश्रुतिस्मृतिवचनान्यपि शक्तौ मानं तदुक्तं चित्सुखाचार्य्यैः ॥
परास्यशक्तिर्विविधासर्गाद्याभावशक्तयः ।
इतिश्रुतिस्मृतिप्रमिताशक्तिः केन निवार्य्यते ॥

म०प्र०—( वह्निरिति ) यथाश्रुतं गुरुत्वमादाय घटे साध्यसमन्वयो बोध्यः । वह्नि-द्व्यणुकेंधनसंयोगमदृष्टवदात्मसंयोगं वाऽऽदाय सिद्धसाधनार्थांतरवारणायाद्दिष्टेति वह्निनिष्ठोष्णस्पर्शमादाय सिद्धसाधनार्थांतरवारणायातीन्द्रियेति स्थितिस्थापकेनार्थां-तरसिद्धसाधनवारणाय स्थितिस्थापकेतरेति स्वाश्रयसंयोगसंबंधेन वह्निवृत्त्यदृष्टरूपप्र-तिबंधकाभावेनार्थांतरसिद्धसाधनवारणाय भावेति स्वमदृष्टरूपप्रतिबंधकाभावस्तदाश्रय आत्मा तस्य संयोगो वह्नाविति संबंधबोधकवाक्यार्थः। वह्निद्व्यणुकैकत्वेन भर्जनक-पालस्थवह्निनिष्ठानुद्भूतरूपेणवा सिद्धसाधनार्थांतरवारणाय भावपदेन दाहानुकूलभाव-ग्रहणस्यावश्यकत्वेन दाहानुकूलेति भावविशेषणेनैवस्थितिस्थापकेन सिद्धसाधनार्थां-तरवारणसंभवात्साध्येस्थितिस्थापकप्रतियोगिकभेदो न निवेशनीयः, नचैवं जलादा-वुक्तसाध्याभावेन गुणित्वस्य सत्त्वेन च गुणित्वहेतौ साध्याभाववद्वृत्तित्वरूपो व्यभिचा-रइति वाच्यम् । गुणित्वशब्दस्य दाहजनकत्वसमानाधिकरणकगुणित्वार्थकतया व्यभिचाराभावादिति ( घटवदिति ) गुरुत्वे दाहानुकूलत्वाभावेन गुरुत्वमादाय घटादौ साध्यसमन्वयाभावाल्लक्षणयाऽदृष्टवदात्मवदित्यर्थः। तथाचादृष्टमादायात्मनि साध्य-समन्वय इति ( नतस्येति ) तस्य—ईश्वरस्य, कार्यम्—स्थूलशरीरं, करणंच—इन्द्रियंच, नविद्यते—नभवति, अस्य—ईश्वरस्य, शक्तिः—मायाख्याशक्तिः परा स्वकार्य्यापेक्षयो-त्कृष्टा, विविधैव—विचित्रकार्य्यकारित्वान्नानाविधैव सात्वैतिह्यमात्रसिद्धा न प्रमाणमात्र,

सिद्धेत्याह ( श्रूयतेइति ) ज्ञानलक्षणबलेन या सृष्टिक्रिया सापीश्वरस्य स्वाभाविकी अनादिरूपा तस्या मायात्मकत्वाद्यद्वा ज्ञानस्य चैतन्यस्य बलं माया-वृत्तिप्रतिबिंबितत्वं तस्य क्रियानाम बिंबत्वेन ब्रह्मणो जनकता ज्ञातृतापि स्वाभाविकी । यद्वा ज्ञानलक्षणबलं सर्जनादिक्रियाच ब्रह्मणो यया मायया सास्वाभाविकीति मायाविशेषणमित्यर्थः । अचिन्त्यज्ञानगोचरा-वीर्य्यादिपदार्थस्य शरीरादिकार्य्यजनने कथं शक्तिरित्यचिंत्याश्च ता ज्ञानगोचरा अनुमित्यादिज्ञानविषया अचिंत्यज्ञानगोचराः । ताः-अचिन्त्यज्ञानगोचराः सर्गाद्याः-सृष्ट्याद्यनुकूलाः भाव-शक्तयः-भावरूपाः शक्तयः । अलुप्तशक्तिरित्यस्याग्रे 'अचिंत्यशक्तिश्च विभोर्विधिज्ञाप-ङाहुरंगानि महेश्वरस्य' इतिपाठो बोध्यः । विधिज्ञाः-वेदार्थज्ञाः ( परास्यशक्तिरिति ) अनेन "परास्य शक्तिर्विविधैव श्रूयते" इत्यादि श्रुतिसूचनम् सर्गाद्यभावशक्तय इत्यनेन तु शक्तयः सर्वभावानामित्यादिस्मृतिसूचनमिति ध्येयम् ॥

**मू०-साच तत्तत्पदजन्यपदार्थज्ञानरूपकार्य्यानुमेया तादृशशक्ति-विषयत्वं शक्यत्वम् ॥**

शि० म०-ननु प्रमाणाभावान्नास्त्यर्थविषयिणी पदानां शक्तिः येन सापदार्थांतरमिति विचार्य्यते इत्यत आह ( साचेति ) यद्वा नन्व-स्तुनिरुक्ताशक्तिस्तथापि शक्यत्वं दुर्वचनं न तावच्छक्तिविषयत्वमन्वय-स्यापि शक्यत्वापत्तेर्नापि ज्ञायमानशक्तिविषयत्वं तथातज्ज्ञापकं न तावत्प्रत्यक्षं गत्वादिवदनुपलम्भात्, नचानुमानं तद्व्याप्यलिंगाभावा-दित्यत आह ( साचेति । तादृशेति ) ज्ञायमानेत्यर्थः । ननु व्यक्तिरेवना-माख्यातपदवाच्या आलंभप्रोक्षणविशसनादिचोदनायाः गामभ्याजेत्या-दिलौकिकचोदनाया हननादिप्रतिषेधस्य च तत्रैव सम्भवात्, कथं तर्हि जातिलाभ इतिचेत आक्षेपात ॥

म०प्र०-ननु पूर्वोक्तानुमानेन पूर्वोक्तश्रुतिस्मृतिभ्यां चार्थनिष्ठशक्तिरेव सिद्धान्तवर्थ-विषयिणी पदनिष्ठाशक्तिरपीत्यभिप्रेत्य शंकते ( ननुप्रमाणाभावादिति ) अर्थविषयिण्यां पदानां शक्तौ मानाभावादित्यर्थः । येन-प्रमाणसिद्धपदनिष्ठशक्तिसद्भावेनहेतुना, सा-अर्थविषयिणीपदानांशक्तिः, तथा-शक्यत्वम्, तज्ज्ञापकम्-पदनिष्ठशक्तिविषयकज्ञान-जनकम् । प्रत्यक्षं-प्रत्यक्षप्रमाणम्, गत्वादिवत्-श्रोत्रजन्यगत्वादिविषयकप्रत्यक्षात्म-कोपलंभवत्, अनुपलंभात्-पदनिष्ठशक्तिविषयकप्रत्यक्षात्मकज्ञानाभावात्, तद्व्याप्येति-शक्तिव्याप्येत्यर्थः । परममूले ( अनुमेयेति ) पदार्थज्ञानं पदनिष्ठस्वानुकूलशक्तिपूर्वकं पदजन्यपदार्थज्ञानरूपकार्य्यत्वाद्व्यतिरेकेघटवदिति व्यतिरेकिलिंगजन्यानुमितिविषये-त्यर्थः । व्यक्तिरेव-धर्म्येव अत्र नामपदमुपलक्षणम् नामोत्तरविधीयमानप्रत्ययस्यापि

तदुपलब्धिर्वा नाद्यः । इष्टापत्तेः नद्वितीय इत्याह ( वस्तुतइति ) एवं सति सुषुप्त्युत्क्रांत्योर्भेदो न स्यादित्याशंक्य निराकरोति ( नचैवमिति । संस्कारात्मनेति ) नाशाख्यसंस्काराविद्यात्मनेत्यर्थः । ननु सुषुप्तौ सकलकार्य्यलयाभ्युपगमे सुप्तोत्थितस्य धर्मादिविनाशे सुखाद्यनुपपत्तिर्दुर्वारा कारणात्मनावस्थानमिति चेत् किमविद्यात्मनावस्थानं कारणात्मनावस्थानमित्यनेन विवक्षितमुतधर्मादेरपि स्वकार्य्यकारणत्वेन स्वरूपेणावस्थानम् । आद्ये धर्मादिकारणमविद्यैव तदावर्तते इत्यर्थः स्यात् । तथाच सुखादिकारणधर्माद्यभावादुक्तदोषतादवस्थ्यं द्वितीये सकले विलीने इति श्रुतिविरोधः । अन्तःकरणस्यापि स्वरूपेणावस्थाने श्वासोपलब्धेर्भ्रमत्वप्रतिपादनविरोधश्चेत्यस्वरसादाह ( यद्वेति । शक्तीइति ) शक्तिः–सामर्थ्यं तच्च फलोपधानं विवक्षितं न स्वरूपयोग्यत्वं तस्य सर्वदा सत्त्वेन ज्ञानशक्तिविशिष्टान्तःकरणस्य सुषुप्तौ विनाश इत्युत्तरग्रंथविरोधात् ॥

म० प्र०–( सुषुप्त्युत्क्रांत्योरिति ) उत्क्रांतिश्चात्र देहजीववियोगरूपाग्राह्या । परममूले ( सुषुप्तशरीरोपलंभवदिति ) यथा सुषुप्तिकाले सुप्तस्य ममेदं शरीरमिति शरीरादिसंबंधाध्यासाभावेन सुषुप्तदृष्ट्या शरीरादेरभावात्सुप्तस्य शरीरेऽन्यस्योपलंभो भ्रमात्मकस्तद्वदित्यर्थः । इदं च दृष्टिसृष्टिवादाभिप्रायेणेति ध्येयमिति परममूले ( परेतादिति ) मृतादित्यर्थः ( नाशाख्यसंस्काराविद्यात्मनेति ) यथा-दर्दुरस्य पृथिव्यां तिरोभावाख्यसंस्काररूपपृथिव्यात्मनावस्थानं तथालिंगशरीरस्यापि तिरोभावाख्यसंस्काररूपाविद्यात्मनावस्थानमित्यर्थः । अनेन–कारणात्मनावस्थानमिति शब्देन, स्वकार्य्यकारणत्वेन–धर्मादिकार्य्यसुखादिकारणत्वेन तदा–सुषुप्तौ ( उक्तदोषेति ) सुप्तोत्थितस्य सुखाद्यनुपपत्तिरूपदोषेत्यर्थः । परममूले ( ज्ञानशक्तिरिति ) ज्ञानाद्यनुकूलसामर्थ्यमित्यर्थः । परममूले ( क्रियाशक्तिरिति ) प्राणादिक्रियानुकूलसामर्थ्यमित्यर्थः । तच्च–सामर्थ्यंच, फलोपधानं–ज्ञानादिफलसंबंधरूपम्, स्वरूपयोग्यत्वम्–अन्तःकरणस्वरूपकारणतावच्छेदकधर्माक्रांतस्वरूपम, तस्य–उक्तस्वरूपयोग्यत्वस्य ॥

**मू०–प्राणाद्यवस्थानमविरुद्धं "यदासुप्तःस्वप्नं न कंचनपश्यति अथास्मिन्प्राणे एकधा भवति अथैनं वाक् सर्वैर्नामभिः सहाप्येति" "सता सोम्य तदा संपन्नो भवतिस्वमपीतो भवंति" इत्यादिश्रुतिरुक्तसुषुप्तौमानम् ॥**

शि० म०-( प्राणादीति ) अत्रादिपदेन सावयवलिंगशरीरधर्माधर्म संस्काराणां परिग्रहः । नच धर्मादेरपि कथं स्वरूपेणावस्थानमन्यथा सुषुप्तिकाले सकले विलीने इति श्रुतिविरोधापत्तेरिति वाच्यम् । धर्मादिकार्य्यस्य सुखादेर्विनाशेन तस्य कार्य्यविशिष्टकारणनाशपरत्वात् । अत एव कैवल्योपनिषदि पुनश्च जन्मान्तरकर्मयोगात्, स एव जीवः स्वपिति प्रबुद्ध इति तदुत्तरवाक्यं संगच्छते। अन्यथा कारणस्य धर्मादेः स्वरूपेण विनाशेन तद्विरोधापत्तेः । अत एव मांडूक्योपनिषदि "यत्र सुप्तो न कंचन कामं कामयते न कंचन स्वप्नं पश्यति तत्सुषुप्तम्' इति निर्वचनम् । अत एवायं पुरुषः प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किंचन वेदेति बृहदारण्यश्रुतिरपि, सुषुप्तौ सकलकार्य्यविलये कौशीतकश्रुतिप्रमाणमाह ( यदेति ) तत्र च्छांदोग्यश्रुतिं प्रमाणयति ( सतासोम्येति ) ॥

म० प्र०-अत्र-मूले अन्यथा-धर्मादेः स्वरूपेणावस्थानस्वीकारे, तस्य-सुषुप्ताबुक्तसकलकार्य्यलयबोधकश्रुतिवाक्यस्य, कार्य्यविशिष्टकारणनाशपरत्वात्-सुखादिकार्य्यविशिष्टधर्मादिकारणलयपरत्वात्, अतएव-सुषुप्तिकाले सकलकार्य्यलयबोधककैवल्योपनिषद्वाक्यस्य कार्य्यविशिष्टकारणनाशपरत्वादेव ( तदुत्तरेति ) सुषुप्तिकाले इत्यादिवाक्योत्तरेत्यर्थः । अन्यथा-सुषुप्तिकाले इत्यादिकार्य्यलयबोधकवाक्यानां कार्य्यविशिष्टकारणनाशपरत्वानंगीकारे किन्तु स्वरूपेण नाशपरत्वस्वीकारे, तद्विरोधापत्तेः-पुनश्च जन्मांतरकर्मयोगादित्यादि वाक्यविरोधापत्तेः, अतएव-कार्य्यलयबोधकवाक्यस्य कार्य्यविशिष्टकारणनाशपरत्वादेव, यत्र-यस्मिन्कालेसुप्तः उपरतेन्द्रियग्रामः न कंचनकामं कामयते कमपि पुण्यपापहेतुभूतपुत्रक्षेत्रादिकं नाभिलषति, नकंचनस्वप्नंपश्यति-कमपि शुभमशुभं वासनाविलासं नावलोकयति, तत्-कामाकामनस्वप्नानवलोकनरूपं सुषुप्तं गाढनिद्राप्राप्तिस्थानं निर्वचनं संगच्छते इति शेषः । अतएव-कार्य्यलयबोधकवाक्यस्य कार्य्यविशिष्टकारणनाशपरत्वादेव ( यत्रेति) नकामयते इत्यादेरिच्छादिरूपकार्य्याभावपरत्वेन स्वरूपेण, पदार्थनाशपरत्वमिति भावः । प्राज्ञेनात्मना-ज्ञानस्वरूपब्रह्मणा, संपरिष्वक्तः-अभिन्नः न बाह्यं किंचन वेदेत्यस्य वेदनरूपकार्याभावपरत्वमिति भावः ( श्रुतिरपीति ) अस्याग्रे संगच्छते इति शेषः । परममूले ( अथेति ) अथसुषुप्तिकालेस्मिन्प्राणेंर्तयामिरूपे ब्रह्मणि, एकधा-भिन्नः अथ सुषुप्तिकाले एवं प्राणरूपांतर्यामिणमित्यर्थः परममूले ( सतेति ) हेसोम्य तदा सुषुप्तिकाले, सता-सद्रूपब्रह्मणा सह संपन्नो-अभेदंगतो पुरुषो भवति स्वमपीतो भवति अत्र स्वशब्देन सच्छब्दवाच्यात्मा परामृश्यते तथा च स्वं

स्वं प्रति सच्छब्दवाच्यात्मनि, अपीतोभवति—लीनोभवति तिरोहितोपाधिर्भवतीत्यर्थः। सति संपद्य न विदुरित्याद्या श्रुतिरादिपदग्राह्या ॥

मू०—प्राकृतप्रलयस्तु कार्य्यब्रह्मविनाशनिमित्तकः सकलकार्य्यनाशः यदातु प्रागेवोत्पन्नब्रह्मसाक्षात्कारस्य कार्य्यब्रह्मणो ब्रह्माण्डाधिकारलक्षणप्रारब्धकर्मसमाप्तौ विदेहकैवल्यात्मिका परममुक्तिः तदा तल्लोकवासिनामप्युत्पन्नब्रह्मसाक्षात्काराणां ब्रह्मणासह विदेहकैवल्यम् ॥

ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे ॥
परस्यान्ते कृतात्मानः प्रविशंति परं पदम् ॥

इतिश्रुतेः एवं तल्लोकवासिभिः सह कार्य्यब्रह्मणि मुच्यमाने तदधिष्ठितब्रह्मांडांतर्वर्तिनिखिललोकतदन्तर्वर्तिस्थावरादीनांभौतिकानां भूतानांच प्रकृतौ मायायां लयो नतु ब्रह्मणि बाधरूपविनाशस्यैव ब्रह्मनिष्ठत्वात् अतःप्राकृतलय इत्युच्यते ॥

शि० म०—( प्राकृतेति ) प्रकृतौ मायायां भवः प्राकृतप्रलय इत्यर्थः। नचसौषुप्तिकप्रलयेऽतिव्याप्तिः । तदासुखादिविनाशस्यान्तःकरणनिष्ठत्वादिति भावः ( तल्लोकवासिनामिति ) सत्यलोकवासिनामित्यर्थः। यद्यपि कार्य्यब्रह्मविनाश एव प्रकृतोपयोगी तथापि तत्प्रमाणत्वेन वक्ष्यमाणवचनेन कृतात्मान इति पदमुत्पन्नब्रह्मसाक्षात्कारवत्परं 'प्रविशंति' पदं च विदेहकैवल्यपरं नतु लोकांतरावाप्तिपरमिति दर्शयितुं तदभिधानमिति बोध्यम् । नन्वयं प्रलयो न प्राकृतः ब्रह्मनिष्ठत्वादित्याशंक्य मायानिष्ठ एवायं प्रलयः । परिणाम्युपादानकालीननाशस्य तन्निष्ठत्वाभ्युपगमात । सत एव घटादिनाशो मृत्पिंडादिनिष्ठ इत्यभिप्रेत्याह ( नत्विति । बाधेति ) इदं च नाशस्य ब्रह्मान्यत्वमभ्युपेत्योक्तं वस्तुतस्तु बाधोपि न ब्रह्मनिष्ठः। तस्याधिष्ठानावशेषत्वादिति बोध्यम् ॥

म० प्र०—परममूले ( प्रागेवेति ) प्रलयात्पूर्वमेवेत्यर्थः। परममूले (ब्रह्मणेति ) परस्य—हिरण्यगर्भस्यांते मुक्तिसमये, प्रतिसंचरे—प्राकृतप्रलयसंप्राप्तेसति, कृतात्मानः—

साक्षात्कृतात्मानः सत्यलोकवासिनः सर्वे ब्रह्मणा सह परमं पदं ब्रह्म प्रविशंति-प्राप्नुवंतीत्यर्थः। ननु प्राकृतप्रलयनिरूपणाय कार्य्यब्रह्मविनाशस्यैवोपयोगित्वेन तदेत्यारभ्य विदेहकैवल्यमित्यंतग्रंथो व्यर्थ इत्याशंक्याह ( यद्यपीत्यादिना ) तत्प्रमाणत्वेन-प्राकृतप्रलये प्रमाणत्वेन, वक्ष्यमाणवचनेन-ब्रह्मणा सहेत्यादिवक्ष्यमाणवाक्येनेति दर्शयितुं, तदभिधानं-तदेत्यारभ्य विदेहकैवल्यमित्यंतग्रंथाभिधानमित्यर्थः। तन्निष्ठत्वाभ्युपगमात्-परिणाम्युपादानवृत्तित्वस्वीकारात्, अतएव-परिणाम्युपादानकालिकनाशस्य परिणाम्युपादानवृत्तित्वाभ्युपगमादेव परममूले, बाधरूपविनाशस्यैवेति-उपादानेन सह कार्य्यनाशस्यैवेत्यर्थः। इदंच-बाधरूपनाशस्यैव ब्रह्मनिष्ठत्वाभिधानं च, ब्रह्मान्यत्वंभावाद्वैतमते नाशस्य ब्रह्मधर्मत्वाद्ब्रह्मान्यत्वम्॥

मू०-कार्यब्रह्मणोदिवसावसाननिमित्तकस्त्रैलोक्यमात्रप्रलयोनैमित्तिकप्रलयः ब्रह्मदिवसश्चतुर्युगसहस्रपरिमितकालः च-

तुर्युगसहस्राणि ब्रह्मणोदिनमुच्यते॥

इति वचनात् प्रलयकालः दिवसकालपरिमितः रात्रिकालस्य दिवसतुल्यत्वात् प्राकृतप्रलये नैमित्तिकप्रलयेच पुराणवचनानि प्रमाणानि॥

द्विपरार्द्धेत्वतिक्रांते ब्रह्मणः परमेष्ठिनः॥

तदा प्रकृतयः सप्त कल्प्यंते प्रलयायहि॥

एषः प्राकृतिको राजन् प्रलयो यत्र लीयते॥

इति वचनं प्राकृतप्रलये मानम्॥

एषनैमित्तिकः प्रोक्तः प्रलयो यत्र विश्वसृक्॥

शेतेऽनंतासने नित्यमात्मसात्कृत्य चाखिलम्॥

इति वचनं नैमित्तिके प्रलये मानं तुरीयप्रलयस्तु ब्रह्मसाक्षात्कारानिमित्तकः सर्वमोक्षः सचैकजीववादे युगपदेव नानाजीववादे क्रमेण 'सर्वेएकीभवंति, इत्यादिश्रुतेः तत्राद्यास्त्रयोपिप्रलयाः कर्मोपरमनिमित्ताः तुरीयस्तु ज्ञानोदयनिमित्तोऽज्ञानेन सहैवेति विशेषः एवं चतुर्विधप्रलयो

निरूपितः तस्येदानीं क्रमो निरूप्यते भूतानां भौतिकानां च न कारणलयक्रमेण लयः ॥

शि० म०—नैमित्तिकप्रलयं निरूपयति ( कार्य्यब्रह्मणइति त्रैलोक्यमात्रेति ) सत्यलोकतदंतर्वर्त्तिकार्य्यव्यतिरिक्तसकलकार्यविनाश इत्यर्थः । तुरीयश्चतुर्थः । सर्वमोक्ष इति सर्वकार्य्यविनाश इत्यर्थः । ननु मोक्षस्यापि प्रलयत्वेनैमित्तिकादिप्रलयाविशेषापत्तौ तद्वदेव मोक्षस्य पुरुषार्थत्वं न स्यादित्यत आह ( तत्रेति ) तथाच मोक्षस्यानर्थहेत्वविद्यानिवृत्तिरूपत्वात् पुरुषार्थत्वमिति भावः । जन्मवल्लयस्यापि क्रमाकांक्षत्वात्तत्क्रमनिरूपणं प्रतिजानीते ( तस्येति ) तर्ह्युत्पत्तिक्रम एव प्रलयेप्यस्तु नतु विपरीतक्रमः । क्लृप्तत्वादित्यत आह ( भूतानामिति ) ॥

म०प्र०—परममूले ( त्रैलोक्येति ) भूरादिलोकत्रयेत्यर्थः । परममूले ( अनंतासने इति ) शेषरूपशय्यायामित्यर्थः । आत्मसात्—स्वाधीनीकृत्य तद्वदेव नैमित्तिकादिप्रलयवदेव, तथाच—तुरीयप्रलयस्य ज्ञानोदयनिमित्तकत्वेन नैमित्तिकप्रलयादिभ्यो वैलक्षण्ये सति ( तत्क्रमेति ) प्रलयक्रमेत्यर्थः । तर्हि—प्रलयक्रमस्य निरूपणीयत्वे सति ( उत्पत्तिक्रमएवेति ) यथा मायोपाधिकब्रह्मण आदावाकाशस्योत्पत्तिः पश्चादाकाशभावापन्नाद्ब्रह्मणः क्रमेण वाय्वादीनामुत्पत्तिस्तथा प्रथमं ब्रह्मण्याकाशस्य लयः पश्चादुत्पत्तिक्रमेणैव वाय्वादीनां लय इत्येव क्रमः प्रलयेऽप्यस्त्वित्यर्थः ( विपरीतेति ) प्रथमं पृथिव्या अप्सु लयोऽपांतेजसीत्यादि विपरीतक्रम इत्यर्थः । क्लृप्तत्वात्—उत्पत्तिक्रमस्य प्रसिद्धत्वात् ॥

मू०—कारणलयसमये कार्य्याणामाश्रयमंतरेणावस्थानानुपपत्तेः । किंतु सृष्टिक्रमविपरीतक्रमेण तत्तत्कार्य्यनाशे तत्तज्जनकादृष्टनाशस्यैव प्रयोजकतयोपादाननाशस्याप्रयोजकत्वात् अन्यथान्यायमतेपि महाप्रलये पृथिवीपरमाणुगतरूपगंधरसादेरविनाशापत्तेःतथाच पृथिव्या अप्सु अपांतेजसि तेजसोवायौ वायोराकाशे आकाशस्य जीवाहंकारे तस्य हिरण्यगर्भाहंकारे तस्य चाविद्यायामित्येवं रूप एव प्रलयः ॥

शि० म०—उत्पत्तिक्रमस्यांगीकारे बाधकमाह ( कारणेति । आश्रयमंतरेणेति ) नच वितश्यदवस्थायामाश्रयमंतरेणैवावस्थानमत एवाना-

श्रिता अवतिष्ठंत इति न्यायसिद्धांत इति वाच्यम् तथाऽसति सर्वदानिराश्रयत्वापत्तेः। ननु क्रमांतराभावादगत्या स एव क्रमः कल्प्यते इति चोदयति ( किंत्विति ) तदभावोऽसिद्ध इत्याह ( सृष्टीति ) नन्वाश्रयनाशानंतरमेव कार्य्यनाशः तस्यैव तद्धेतुत्वादित्यत आह ( तत्तत्कार्येति ) अयंभावः न तावदाश्रयनाशमात्रं हेतुः पाकरक्तघटे श्यामनाश आत्मनि गुणनाशश्च न स्यात्। नचाश्रयनाशः कार्य्यद्रव्यनाशे हेतुः द्व्यणुकनाशाभावप्रसंगात्, नच तत्रासमवायिकारणनाशाद्व्यणुकनाशः आत्मनि पाकरक्ते घटे च विरोधिगुणाविर्भावाद्गुणनाश इति न दोष इतिवाच्यम्। अननुगमात् कार्य्यजनकादृष्टनाशस्यानुगतस्यतत्तत्कार्य्यनाशजनकत्वसंभवेनाननुगमस्यान्याय्यत्वादिति अदृष्टनाशस्य कारणत्वानंगीकारे बाधकमाह ( अन्यथेति ) सिद्धांते परमाणोरनभ्युपगमादाह ( न्यायमतेपीति ) तथाचादृष्टनाशस्य सत्त्वात्स एव सर्वत्र प्रयोजक इतिभावः॥

म०प्र०–अतएव–आश्रयं विनैवाश्रितकार्य्यावस्थानसंभवादेव, अनाश्रिताः आश्रयरहिताः संतः, अवतिष्ठत–आश्रयनाशोत्तरकाले आश्रितकार्य्याणां परैर्नाशाभ्युपगमादाश्रयनाशक्षणोत्तरक्षणावस्थानवंत आश्रितपदार्था भवंति। तथासति–आश्रयनाशोत्तरक्षणेकार्य्याणामाश्रय विनावस्थानाभ्युपगमे। स एव–उत्पत्तिक्रमएव, तदभावः–उत्पत्तिक्रमात्क्रमांतराभावः। तस्यैव–आश्रयनाशस्यैव, तद्धेतुत्वात्–कार्य्यनाशहेतुत्वात्। तत्र–द्व्यणुके। दोषः–आत्मादौ गुणनाशाभावरूपो दोषः ( अननुगमादिति ) त्र्यणुकादिनाशत्वावच्छिन्ननाशं प्रत्याश्रयानाशस्य हेतुत्वं द्व्यणुकनाशत्वावच्छिन्ननाशं प्रत्यसमवायिकारणनाशस्य हेतुत्वं योग्यविभुगुणनाशत्वावच्छिन्ननाशं प्रति पाकरक्तघटे पूर्वगुणनाशत्वावच्छिन्ननाशं प्रति च विरोधिगुणोत्पत्तेर्हेतुत्वमिति कार्य्यतावच्छेदककारणतावच्छेदकयोरेकरूपत्वाभावापातादित्यर्थः। अनुगतस्य–अदृष्टनाशत्वरूपैकविधनाशकतावच्छेदकधर्मवतः। अननुगमस्य–अनेककार्य्यतावच्छेककारणतावच्छेदकस्य ( अनभ्युपगमादिति ) अनभ्युपगममभिप्रेत्येत्यर्थः। तथाच–कार्य्यनाशत्वावच्छिन्नकार्य्यनाशं प्रत्यदृष्टनाशस्य हेतुत्वाभ्युपगमे सति, सएव–अदृष्टनाशएव। सर्वत्र–सर्वकार्य्यनाशे, प्रयोजकः–कारणम्॥

मू०–तदुक्तं विष्णुपुराणे

जगत्प्रतिष्ठादेवर्षेपृथिव्यप्सु प्रलीयते।
तेजस्यापः प्रलीयंते तेजो वायौ प्रलीयते॥

वायुश्चलीयते व्योम्नि तच्चाव्यक्ते प्रलीयते ।
अव्यक्तं पुरुषे ब्रह्मन् निष्कले च प्रलीयते इति ॥

एवं विधप्रलयकारणत्वं तत्पदार्थस्य ब्रह्मणस्तटस्थ लक्षणम्। ननु वेदांतैर्ब्रह्माणि जगत्कारणत्वेन प्रतिपाद्यमाने सति सप्रपंचं ब्रह्म स्यादन्यथा सृष्टिवाक्यानामप्रामाण्यापत्तेरितिचेन्न ॥

शि० म०–पृथिव्यादेरबादौ लये प्रमाणमाह ( तदुक्तमिति ) वस्तुतस्त्वाकाशस्येंद्रियेष्वेव लयः इंद्रियाणां तन्मात्रेषु तेषां जीवाहंकारे तस्य च हैरण्यगर्भाहंकारे तस्य च मायायामित्येवं बोध्यम्। पृथिव्यप्सु प्रलीयते आपस्तेजसि विलीयंते तेजो वायौ विलीयते वायुराकाशे आकाशमिंद्रियेषु इंद्रियाणि तन्मात्रेषु तन्मात्राणि भूतादौ विलीयंते भूतादिर्महति विलीयते महानव्यक्त इति सुबालोपनिषदि तथैव श्रवणात् । ननु तत्पदार्थनिरूपणे सक्रमप्रलयनिरूपणस्य कः प्रसंग इत्याशंक्य तस्य प्रकृतोपयोगमाह ( एवंविधेति ) ननु प्रपंचोपाधिकं जगज्जन्मादिकारणत्वं ब्रह्मणस्तटस्थलक्षणमित्युक्तं तदयुक्तं प्रमाणाभावात् । नच यतोवेत्यादिवाक्यं तत्र प्रमाणमित्युक्तमिति वाच्यम्, ब्रह्ममात्रपराणां वेदांतानां तत्रप्रामाण्याभावात् । अन्यथा सप्रपंचं ब्रह्म शास्त्रार्थः स्यादिति चोदयति ( नन्विति ) नहि योयोर्थः प्रतीयते स सर्वोपि शास्त्रार्थः सुरां पिबेदित्यादौ सुरापानकर्त्तव्यत्वस्यापि शास्त्रार्थत्वापत्तेः, किंतु यस्तात्पर्य्यविषयः यत्परः शब्दः स शब्दार्थ इत्यभ्युपगमात् सृज्यमानप्रपंचस्तु श्रुतिप्रतिपाद्योपि न तात्पर्य्यविषय इति न शास्त्रार्थः । नच निंदाश्रवणेन प्रायश्चित्तोपदेशेन च सुरापानकर्तव्यतायाः शास्त्रतात्पर्य्यविषयत्वाभावेपि प्रकृते तदभावेन सप्रपंचं ब्रह्म तात्पर्य्यविषयः स्यादिति वाच्यम्। "उदरमंतरं कुरुते अथ तस्य भयं भवति" ॥

आत्मनश्च परस्यापि यः करोत्यंतरं मिथः ।
तस्य भिन्नदृशो मृत्युर्विधत्ते भयमुल्बणम् ॥

म०प्र०–( तस्यचेति ) जीवाहंकारस्य चेति प्रथमतच्छब्दार्थः ( तस्यचेति ) हैरण्यगर्भाहंकारस्यचेति द्वितीयतच्छब्दार्थः । तस्य–सक्रमप्रलयनिरूपणस्य ( प्रकृतेति )

तत्पदार्थनिरूपणेत्यर्थः । प्रपंचोपाधिकं–प्रपंचनिमित्तकम् । तत्र–ब्रह्मणोजगज्जन्मादिकारणत्वे, अन्यथा–ब्रह्मणोजगज्जन्मादिकारणत्वे वेदान्तानां प्रामाण्याभ्युपगमे सति ( सुरांपिबेदिति ) कर्मविशेषोपकारतात्पर्य्येणेदं वाक्यं प्रवृत्तं नतूपभोगतात्पर्य्येण सुरापानविधानार्थवेदवाक्यं प्रवृत्तमिति भावः । यत्परः–योर्थःपरस्तात्पर्य्यविषयो यस्य शब्दस्य सयत्परः । सः–तात्पर्य्यविषयः, प्रकृते–जगत्सृष्टयादौ. तदभावेन–निंदाश्रवणप्रायश्चित्तोपदेशाभावेन, उल्बणं–दुःसहं महद्वा ॥

मू०–नहि सृष्टिवाक्यानां सृष्टौ तात्पर्य्यं किंत्वद्वये ब्रह्मण्येव तत्प्रतिपत्तौ कथं सृष्टेरुपयोगः । इत्थं यदि सृष्टिमनुपन्यस्य प्रपंचस्य निषेधो ब्रह्मणि प्रतिपाद्येत तदा ब्रह्मणि प्रतिषिद्धस्य प्रपंचस्य वायौ प्रतिषिद्धस्य रूपस्येव ब्रह्मणोऽन्यत्रावस्थानशंकायां न निर्विचिकित्सितमद्वितीयत्वं प्रतिपादितं स्यात् । ततःसृष्टिवाक्याद्ब्रह्मोपादेयत्वज्ञाने सत्युपादानं विना कार्य्यस्यान्यत्र सद्भावशंकाया निरस्ततया नेतिनेतीत्यादिना ब्रह्मण्यपि तस्यासत्त्वोपपादने प्रपंचस्य तुच्छत्वावगमे निरस्तनिखिलद्वैतविभ्रमखंडसच्चिदानंदैकरसं ब्रह्म सिद्ध्यतीति परंपरया सृष्टिवाक्यानामद्वितीये ब्रह्मण्येव तात्पर्य्यम् ॥

शि० म०–अंधंतमः प्रविशंति ये के चात्महनो जनाः ।
योऽन्यथा संतमात्मानमन्यथा प्रतिपद्यते ।
किं न तेन कृतं पापंचौरेणात्मापहारिणा ॥

इत्येवमादिभेददर्शननिंदावचनस्य बहुलमुपलंभात् । प्रपंचस्य लोकावगतत्वेन तत्र तात्पर्य्यायोगात् । अज्ञातस्यैव शास्त्रतात्पर्य्यविषयत्वात् । प्रपंचपरत्वे 'नेहनानास्ति' इति प्रतिषेधानुपपत्तेश्चेत्याशयेनाह ( नहीति ) ननु सृष्टयादिवाक्यानां कथमद्वितीयब्रह्मप्रतिपत्तौ विनियोगः नतावत्पुच्छब्रह्मप्रतिपत्तावन्नमयादिवाक्यवत् स्थूलारुंधतिन्यायेन सूक्ष्मब्रह्मप्रतिपत्तावुपयोगः । तद्वत्प्रपंचस्य ब्रह्मत्वेनानुपदेशात् । नाप्युपासनावाक्यवद्ब्रह्मज्ञानोपयोग्यन्तःकरणशुद्धिद्वारा उपासीतेत्यत्राश्रवणात् । नच प्रतिषेध्यप्रपंचसमर्पकतया तत्रोपयोगः अन्योत्पन्न-

स्यापि प्रपंचस्य तत्र प्रतिषेधसंभवेन ब्रह्माधीनसृष्ट्यभिधानवैयर्थ्या-पातात् । तथाच सृष्ट्यादिवाक्यानां सप्रपंचब्रह्मपरत्वाभावे अप्रा-माण्यापत्तौ न निष्प्रपंचब्रह्मशास्त्रार्थ इत्याक्षिपति ( तत्प्रतिपत्ताविति ) यद्यप्यन्याधीनस्यापि प्रपंचस्य ब्रह्मणि प्रतिषेधः संभवति तथापि वायौ प्रतिषिद्धरूपवन्निषेध्यस्य पारमार्थिकत्वेपि संभवेन तन्मिथ्या-त्वासिद्ध्या ब्रह्मणोऽद्वितीयत्वासिद्धिप्रसंगः ब्रह्माधीनसृष्टिस्थिति-लयोपन्यासेतु प्रपंचस्य ब्रह्मोपादेयतया सिद्धस्य नेहनानास्तीत्या-दिना तत्रैव निषेधे शुक्तिरूपवन्मिथ्यात्वावगतावद्वितीयं ब्रह्म सिद्ध्यती-त्याह ( इत्थमिति ) ॥

म०प्र०–प्रपंचपरत्वे–सृष्टिवाक्यानां प्रपंचविषयकतात्पर्य्यस्वीकारे, विनियोगः–संबंधः ब्रह्मप्रतिपत्त्यर्थत्वमिति यावत् ( पुच्छेति ) सर्वाधिष्ठानेत्यर्थः ( स्थूलारुं-धतीति ) यथा लोके बालस्य सूक्ष्मारुंधतीज्ञानाय प्रथमं स्थूलनक्षत्रेष्वरुंधती-त्वस्याहार्य्योपदेश उपयोगी दृष्टस्तथासृष्टिवाक्यादिकमपि सूक्ष्मब्रह्मप्रतिपत्तावु-पयोगिस्यादिति भावः । तद्वत्–अन्नमयादीनां ब्रह्मत्वोपदेशवत् । अत्र–सृष्टि-वाक्यादौ तत्र–ब्रह्मप्रतिपत्तौ, तत्र–ब्रह्मणि । वायौप्रतिषिद्धरूपवत्–वायौ प्रतिषिद्धरूपस्य पृथिव्यादौ पारमार्थिकत्वेनावस्थानवत्, निषेध्यस्य–नेतिनेतिवाक्य-बोधितनिषेधविषयप्रपंचस्य, संभवेन–निषेधसंभवेन । ब्रह्मोपादेयतया–ब्रह्मकार्य्यतया, तत्रैव–ब्रह्मण्येव ॥

सू०–उपासनाप्रकरणपठितसगुणब्रह्मवाक्यानामुपासनाविध्यपे-क्षितगुणारोपमात्रपरत्वं न गुणपरत्वम् ॥

शि० म०–प्रसंगाद्वाक्यांतरस्यापि तदुपयोगमाह ( उपासनेति ) यद्वा ननु यथा यएषोंतरादित्ये हिरण्मयः पुरुष इत्यादिवाक्यानां सगुणब्रह्मपरत्वं तद्वत्सृष्टिवाक्यानामपि सप्रपंचब्रह्मपरत्वं स्यादित्या-शंक्य किमुपासनाप्रकरणपाठितानां हिरण्यमयादिवाक्यानां गुणपरत्व-मुतनिर्गुणप्रकरणपाठितानां द्वे वाव ब्रह्मणो रूपे मूर्तंचामूर्तंचेत्यादीनां तत्राद्यं दूषयति ( उपासनेति । गुणारोपेति ) वाचं धेनुमुपासीतेत्यादि-वद्वास्तवगुणाभावेपि तदारोपमात्रेणोपासनासंभवात् । नचैवमपि तदारोपपरत्वं न ब्रह्मपरत्वमिति वाच्यम् । फलानुषंगरहितानामुपास-नानां साक्षादन्तःकरणशुद्धिहेतूनां तद्द्वाराब्रह्मज्ञाने विनियोगात् । अत एव ॥

योगिनः कर्मकुर्वंति संगंत्यक्त्वात्मशुद्धये ॥

इति भगवद्गीतावचनं ददामि देयमित्येव यजे यष्टव्यमित्यपीत्यारण्यपर्वणि रुक्मिणीं प्रति द्रौपदीवचनं च फलोद्देशेन क्रियमाणानां चोपासनानां क्रममुक्तिफलकत्वात् ॥

म० प्र०–प्रसंगात्–स्मृतस्योपेक्षानर्हत्वरूपप्रसंगात्, वाक्यांतरस्य–सृष्टिवाक्यान्योपारानावाक्यस्य, तदुपयोगं–ब्रह्मप्रतिपत्तावुपयोगं, गुणपरत्वं–हिरण्यमयत्वादिधर्मपरत्वम् ( इत्यादीनामिति ) अस्य गुणपरत्वमिति पूर्वेणान्वयः । परममूले ( नगुणपरत्वमिति ) वास्तवधर्मपरत्वं न किंतुशुद्धसच्चिदानंदब्रह्मपरत्वमित्यर्थः ( वाचमिति ) वाचिधेनुत्वरूपवास्तवधर्माभावेपि वाचिधेनुत्वरूपधर्मारोपेणात्रवाक्ये उपासनविधानवदित्यर्थः । वास्तवगुणाभावेपि–ब्रह्मणि वास्तवधर्माभावेपि, तदारोपमात्रेण–धर्मकल्पनयैव, एवमपि–धर्मकल्पनयोपासनासंभवेपि, तदारोपपरत्वं–उपासनावाक्यानां धर्मकल्पनापरत्वं, फलानुषंगरहितानाम्–फलोद्देशेनाक्रियमाणानाम्. तद्द्वारा–अन्तःकरणशुद्धिद्वारा । विनियोगात्–संबंधात्, अतएव–फलकामनारहितोपासनादेरन्तःकरणशुद्धिद्वारा। ब्रह्मज्ञातार्थत्वादेव ( भगवद्गीतावचनमिति ) अस्याग्रे उपपद्यते इतिशेषः ( ददामीति ) अधिकारिणं प्रति धनादिकं देयं दातुं योग्यमित्येष बुद्ध्याहं ददामि दानं करोमि नतु फलकामनया एवं विहितं कर्म यष्टव्यं संपादयितुं योग्यमित्येव बुद्ध्याहं यजे कर्मकरोमि ननु फलकामनयेत्यर्थः । इदमपि वचनं फलकामनारहितयागदानादेरन्तःकरणशुद्धिद्वारा ब्रह्मज्ञानार्थत्वं बोधयतीति भावः । नन्वेवं फलोद्देशेन क्रियमाणोपासनाविषयकवाक्यानां ब्रह्मपरत्वं न स्यादित्याशंक्य तेषामपि वैराग्यादिद्वारा हिरण्यगर्भलोकप्राप्तिद्वारा च ब्रह्मपरत्वमित्यभिप्रेत्याह ( फलोद्देशेनेति ) क्रममुक्तिफलकत्वात्–सातिशयत्वादिदोषवत्फलकोपासनानिरूपणेन शुद्धान्तःकरणपुरुषस्य वैराग्यमुत्पद्यत इतिवैराग्याद्युत्पत्तिक्रमेण हिरण्यगर्भलोकावाप्तिक्रमेण च फलोद्देशेन क्रियमाणोपासनानां मुक्तिफलकत्वात् तथाच न पूर्वोक्तदोष इति भावः ॥

**मू०–निर्गुणप्रकरणपठितानां सगुणवाक्यानां तु निषेधवाक्यापेक्षितनिषेध्यसंपादकत्वेनविनियोग इति न किंचिदपि वाक्यमद्वितीयब्रह्मप्रतिपादनेन विरुध्यते ॥**

शि० म०–द्वितीयं निरस्यति ( निर्गुणेति ) बृहदारण्यके हि मूर्तंचैवामूर्तंच मर्त्यंचामृतंचेत्युपक्रम्य तदेतन्मूर्तं यदन्यद्वायोरंतरिक्षाच्चेत्यादिना वाय्वंतरिक्षव्यतिरिक्तं मूर्तं वाय्वंतरिक्षंचामूर्त्तमित्यादिभौतिकमुपन्यस्याध्यात्ममित्यादिना प्राणव्यतिरिक्तं मूर्तं प्राणश्चामूर्तमित्याध्या-

त्मिकमभिधाय अथात आदेशो नेति नेतीति निषेधातितत्र मूर्तादिगुण-वाक्यानां निषेधवाक्यापेक्षितनिषेधप्रतियोगिसमर्पकतया प्रकरणार्थ-निर्गुणब्रह्मज्ञाने विनियोग इत्यर्थः । ननु कर्मकांडवाक्यानां यथा ब्रह्म-ज्ञाने विनियोगाभावात् स्वार्थपरत्वं तथा सृष्ट्युपासनवाक्यानामप्यस्तु स्वार्थमात्रपरत्वं किंच ब्रह्मणो निष्प्रपंचत्वे कर्मवाक्यानां यावस्वर्गादिसा-ध्यसाधनभावप्रतिपादकानामसति स्वर्गादिलोकप्रपंचे कथं प्रामाण्य-मिति चेत् न, तावदप्रामाण्यं स्वर्गयागादीनां व्यावहारिकत्वाभ्यु-पगमात् । नाप्यनुपयोगः अग्निहोत्रादीनामपि फलानुषंगरहितानामारा-दुपकारकत्वस्य 'सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्' इत्यत्रसूत्रकारेणांगीकृ-तत्वेन चित्तशुद्धावुपयोगसंभवात्तदेतदाह ( नकिंचिदपिवाक्यमद्विती-यब्रह्मप्रतिपादनेनेति ) ॥

म० प्र०-( मर्त्यंचामृतंचेति ) अत्र चकारावनधारणार्थौ । पूर्वोक्तमूर्तामूर्त्तयोरेव विशेषणं मर्त्यत्वादिकं मर्त्यंच क्षिप्रविनाश्येव, अमर्त्यंच-मोक्षात्प्रागविनाश्येव, अथ-मूर्त्तामूर्त्तादिप्रपंचाध्यारोपकथनानंतरं, अतः-मूर्तामूर्तादिप्रपंचापवादस्य ब्रह्म-ज्ञानार्थत्वात्, आदेशः-उपदेशः, तत्र-नेतिनेतीतिवाक्येन निषेधे सति मूर्तादिगुण-वाक्यानांप्रकरणार्थनिर्गुणब्रह्मज्ञाने विनियोग इति संबंधः ( विनियोगइति ) तात्प-र्यमुक्तब्रह्मज्ञानजनकत्वाख्यसंबंधो वा नत्वंगप्रधानसंबंधबोधकत्वरूपोत्रविनियोग-स्तस्यात्रासंभवादित्यर्थः । फलानुषंगरहितानां-फलोद्देशेनाक्रियमाणानाम्, आराद्-पकारकत्वस्य-अन्तःकरणशुद्ध्यादिरूपपरंपरयोपकारकत्वस्य ( सर्वापेक्षेति ) तृतीया-ध्यायस्य चतुर्थपादस्य षडधिकविंशतिसंख्याकसूत्रमिदम् अस्यार्थः किं विद्याया आश्रमकर्मणामत्यंतमेवानपेक्षोक्तास्तिकाचिदपेक्षेति संशये विद्याग्नींधनाद्याश्रमक-र्माणि नापेक्ष्यंते इत्येवमत्यंतानपेक्षायां प्राप्तायामिदमुच्यते ( सर्वापेक्षाचेति ) अपेक्षते च विद्या सर्वाण्याश्रमकर्माणि नात्यंतमनपेक्षैव । ननु विरुद्धमिदं वचनम-पेक्षते च विद्याश्रमकर्माणि विद्यानापेक्षते चेत्यतो ब्रूमः उत्पन्नाहि विद्या स्वफल-सिद्धिं प्रति न किंचिदन्यदपेक्षते स्वोत्पत्तिं प्रति त्वाश्रमकर्माण्यपेक्षते कुतो यज्ञा-दिश्रुतेः-तमेतमित्यादिश्रुतेः, अश्ववत्-यथाऽश्वस्यरथक्रियायां योग्यत्वं नतु लांगल-क्रियायां योग्यत्वं तथा सर्वकर्मणान्तःकरणशुद्धिद्वाराज्ञानोत्पत्तौ योग्यत्वं नतुस्व-फलाविद्यानिवृत्तौ योग्यत्वमिति ॥

मू०-तदेवं स्वरूपतटस्थलक्षणलक्षितं तत्पदवाच्यमीश्व-रचैतन्यं मायाप्रतिबिंबितमिति केचित् तेषामयमाशयः

जीवपरमेश्वरसाधारणचैतन्यमात्रं बिंबं तस्यैव बिंबस्यावि-द्यात्मिकायां मायायां प्रतिबिंबमीश्वरचैतन्यमन्तःकरणेषु प्रतिबिंबं जीवचैतन्यं "कार्य्योपाधिरयं जीवः कारणोपाधि-रीश्वरः" इति श्रुतेः एतमन्ते जलाशयगतशरावगतसूर्य्य-प्रतिबिंबयोरिव जीवपरमेश्वरयोर्भेदः ॥

शि० म०—नन्विदं लक्षणद्वयमयुक्तं लक्ष्याभावात् । तथाहि न तत्पद-वाच्यं लक्ष्यं तद्धि न चिद्रूपं जीवस्यापि तथात्वात् । नाप्यविद्याव-च्छिन्नो जीवः । मायावच्छिन्न ईश्वर इति वाच्यम् । तरत्यविद्यामित्यादौ मायाविद्ययोः सामानाधिकरण्यव्यपदेशान्नतयोर्भेद इत्युक्तत्वात् । तस्मा-ल्लक्ष्यानिरूपणाल्लक्षणद्वयं न युक्तमित्याशंक्याह ( तदेवमिति ) अवि-द्याप्रतिबिंबरूपमीश्वरचैतन्यं तत्पदवाच्यं तदेव स्वरूपलक्षणतटस्थलक्षण-योर्लक्ष्यमित्यर्थः । नन्वविद्याप्रतिबिंबो जीवः, तत्कथमीश्वरस्यावि-द्याप्रतिबिंबत्वमित्याशंक्य एतन्मतेप्यन्तःकरणप्रतिबिंबो जीव इत्याह-( तेषामिति ) अन्तःकरणावच्छिन्नो जीवः तदनवच्छिन्न ईश्वर इति केचित्तन्न । स्मृतिविरोधादित्याह ( कार्य्येति ) कार्य्य-मन्तःकरणं करणमविद्या किंच जीवेश्वरावन्तःकरणाविद्याप्रतिबिंबा-विति युक्तं नत्ववच्छिन्नानवच्छिन्नौ तथासति जीवेश्वरयोरत्यंतभेदापत्ते-रित्याह ( एतन्मतेइति ) ॥

म० प्र०—लक्षणद्वयं—स्वरूपलक्षणं तटस्थलक्षणं च । लक्ष्याभावात्—लक्षणद्वय-लक्ष्याभावात्, लक्ष्यं—लक्षणद्वयलक्ष्यम् । तद्धि—तत्पदवाच्यं हि । मायाविशिष्टचैतन्य-घटकीभूतचैतन्यमात्रमुक्तस्वरूपलक्षणलक्ष्यं न भवतीत्यत्र हेतुमाह ( जीवस्या-पीति ) जीवस्यापि चिद्रूपत्वेन लक्षणद्वयलक्ष्यत्वापातादित्यर्थः । मायाविशिष्ट-चैतन्यस्योक्तस्वरूपलक्षणतटस्थलक्षणलक्ष्यत्वं निराकर्तुमाशंकते अविद्यावच्छिन्न-इत्यादिना सामानाधिकरण्येति । अभेदेत्यर्थः मायाऽविद्ययोरभेदमभिप्रेत्याह ( अविद्याप्रतिबिंबेति ) तत्—तस्मात्कारणादविद्याप्रतिबिंबस्यजीवत्वात् एतन्मतेपि—( अविद्याप्रतिबिंब ईश्वर इतिपक्षेपि अपिशब्देन बिंबात्मकमीश्वरचैतन्यमितिवदतोऽ-नेकजीववादिनो मतस्य परिग्रहो बोध्यः । अन्तःकरणावच्छिन्नः—अन्तःकरणेन परिच्छिन्नतामापन्नः, तदनवच्छिन्नः—अन्तःकरणेन परिच्छिन्नतामनापन्नः ( अत्यंत-भेदेति ) पारमार्थिकभेदेत्यर्थः । परममूले ( भेदइति ) एतन्नये जलाशयगतसूर्यादि-

प्रतिबिंबयोः कल्पितभेदवज्जीवेश्वरयोरपि कल्पितभेद इति न ब्रह्मणोऽद्वितीयत्व हानिरिति भावः ॥

मू०—अविद्यात्मकोपाधेर्व्यापकतया तदुपाधिकेश्वरस्यापि व्यापकत्वम् । अन्तःकरणस्य परिच्छिन्नतया तदुपाधिकजीवस्यापि परिच्छिन्नत्वम् एतन्मते अविद्याकृतदोषाः जीव इव परमेश्वरेऽपि स्युः उपाधेः प्रतिबिंबपक्षपातित्वादित्यस्वरसात् । बिंबात्मकमीश्वरचैतन्यमित्यपरे तेषामयमाशयः एकमेवचैतन्यं बिंबत्वाक्रांतमीश्वरचैतन्यं प्रतिबिंबत्वाकांतं जीवचैतन्यम् बिंबप्रतिबिंबकल्पनोपाधिरेकजीववादे अविद्या अनेकजीववादे अन्तःकरणान्येव ॥

शि० म०—अपिच ईश्वरस्यानवच्छिन्नरूपत्वे ब्रह्मांडस्य सर्वजीवाक्रांततयाऽनवच्छिन्नस्य ब्रह्मणोस्माद्बहिरेवावस्थानापत्तौ सर्वगतत्वसर्वोपादानत्वसर्वांतर्यामित्वादि ब्रह्मणो न स्यात् । अविद्याप्रतिबिंबत्वपक्षेतु तत्सर्वमुपपद्यते इत्याशयेनाह ( अविद्येति ) जीवस्य तु न व्यापकत्वं तदुपाधेरव्यापकत्वादित्याह ( अंतःकरणस्येति ) एकजीववादे अविद्याप्रतिबिंबो जीव इति तत्र जीवेश्वरविभागो न स्यादिति प्रतिबिंबत्वे दोषे सत्येवदोषांतरमाह ( एतन्मते इति ) ननु सिद्धांते बिंबप्रतिबिंबयोरभेदेन चैतन्यस्यैव बिंबप्रतिबिंबात्मकतया कथमेकस्यैव जीवेश्वरभाव इत्याशंक्य तस्य बिंबत्वेनेश्वरत्वं प्रतिबिंबत्वेन जीवत्वंचाविरुद्धमित्याह ( एकमेवेति ) ननु बिंबप्रतिबिंबभावो यदि पारमार्थिकस्तदा निष्कलंकत्वविरोधः उपाधिश्च सन्निहितः पारमार्थिकः स्यादित्यद्वितीयत्वव्याघातः । यदि कल्पितस्तत्कल्पनोपाधिर्यद्यन्तःकरणं तदा एकजीववादानवकाशः यद्यविद्या तदा नाना जीववादादविरोध इत्याशंक्य मतभेदेन व्यवस्थितोपाधिमाह ( बिंबेति ) ॥

म० प्र०—अनवच्छिन्नरूपत्वे—अन्तःकरणेन परिच्छिन्नतानापन्नरूपत्वे । आक्रांततया—व्याप्ततया, अस्मात्—ब्रह्मांडात् ( अविद्याप्रतिबिंबत्वेति ) ईश्वरस्याविद्याप्रतिबिंबत्वेत्यर्थः । तत्सर्वं—सर्वगतत्वादिकं सर्वं, इतिहेतोः—जीवस्याविद्याप्रतिबिंबस्वरूपत्वाद्धेतोरिति यावत्, तत्र—एकजीववादे इति—इत्याकारके । प्रतिबिंबत्वे—ईश्वरस्यप्रतिबिंबत्वपक्षे । परममूले ( अविद्याकृतदोषाइति ) कर्तृत्वभोक्तृत्वबद्धत्वमुक्त-

त्वादयो दोषा इत्यर्थः ( चैतन्यस्यैवेति ) चैतन्यमात्रनिष्ठबिंबप्रतिबिंबत्वप्रयोज्य-एकचैतन्यनिष्ठजीवेश्वरभावः कथमित्यर्थः तस्य-एकचैतन्यस्य। बिंबत्वेन-चलनाद्युपाधिधर्मशून्यत्वे सत्युपाधावभिव्यक्तत्वेनोपाधिनिमित्तकस्वप्रतियोगिकव्याप्यवृत्तिभेदाश्रयत्वे सत्यौपाधिकपरिच्छेदरहितत्वेन वा। प्रतिबिंबत्वेन-चलनाद्युपाधिधर्मवत्त्वे सत्युपाधावभिव्यक्तत्वस्वरूपत्वेन उपाधिनिमित्तकस्वप्रतियोगिकव्याप्यवृत्तिभेदाश्रयत्वे सत्यौपाधिपरिच्छिन्नत्वस्वरूपत्वेन वा निष्कलंकत्वाविरोधःनिष्कलं निष्क्रियमित्यादिश्रुतिबोधितनिर्धर्मकत्वानुपपत्तिः बिंबप्रतिबिंबभावस्य पारमार्थिकत्वमुपाधेर्नित्यसन्निहितत्वं पारमार्थिकत्वं च विना न संभवतीत्युपाधिनिष्ठं नित्यसन्निहितत्वं पारमार्थिकत्वं च वाच्यम्। तथाच ब्रह्मणोऽद्वितीयत्वविरोधः स्यादित्यभिप्रेत्याह ( उपाधिश्चेत्यादिना ) नित्यसन्निहितः सर्वदाबिंबसमीपस्थः। तत्कल्पनेति बिंबप्रतिबिंबभावकल्पनेत्यर्थः॥

मू०-अविद्यान्तःकरणोपाधिप्रयुक्तो जीवपरभेदः उपाधिकृत दोषाश्च प्रतिबिंबे जीव एव वर्तते नतु बिंबे परमेश्वरे उपाधेः प्रतिबिंबपक्षपातित्वात् एतन्मते च गगनसूर्यस्य जलादौ भासमानप्रतिबिंबसूर्यस्येव जीवपरयोर्भेदः। ननु ग्रीवास्थमुखस्य दर्पणप्रदेश इव बिंबचैतन्यस्य परमेश्वरस्य जीवप्रदेशे अभावात् तस्य सर्वांतर्यामित्वं न स्यादिति चेन्न। साभ्रनक्षत्रस्याकाशस्य जलादौ प्रतिबिंबितत्वे बिंबभूतमहाकाशस्यापि जलादिप्रवेशसंबंधदर्शनेन परिच्छिन्नबिंबस्य प्रतिबिंबदेशासंबंधेऽप्यपरिच्छिन्नब्रह्मबिंबस्य प्रतिबिंबप्रदेशसंबंधाविरोधात्। नच रूपहीनस्य ब्रह्मणो न प्रतिबिंबसंभवः रूपवत एव तथात्वदर्शनादिति वाच्यम्। नीरूपस्यापि रूपस्य प्रतिबिंबदर्शनात्। नच नीरूपस्य द्रव्यस्य प्रतिबिंबाभावनियमः आत्मनो द्रव्यत्वाभावस्योक्तत्वात्॥

शि० म० मतभेदेन भेदमाह ( अविद्यान्तःकरणेति पूर्वमतोक्तदोषो नात्र मते प्रसरतीत्याह ( उपाधीति ) अत एव दर्पणगतमुखप्रतिबिंब एवश्यामावदातत्वादिकमिति भावः। ननूपाधिकृतो भेदइत्ययुक्तं स्वरू-

पत एव भेदसंभवादित्यत आह ( एतन्मतेइति ) ईश्वरस्य बिंबत्वे बाधकमाशंकते ( नन्विति ) सर्वांतर्यामित्वं न स्यादित्युपलक्षणं सर्वोपादानत्वं च न स्यादित्यपि बोध्यम् । परिच्छिन्नस्यैव बिंबस्य प्रतिबिंबदेशावृत्तित्वनियमोनापरिच्छिन्नस्येत्याह ( नेति ) ननु महाकाशो जलादौ न प्रतिबिंबते तत्रान्याकाशस्यैव भानसंभवादित्याशंक्याह ( साभ्रेति ) नचाभ्रादिकमेव तत्र न महाकाश इति वाच्यं प्रत्यभिज्ञाविरोधात् । किं नीरूपस्य प्रतिबिंबाभावनियमः उतनीरूपद्रव्यस्य तत्राद्यं निराकृत्य द्वितीयं दूषयति ( नचेति । आत्मन इति ) आत्मा न द्रव्यं तद्धि नसमवायिकारणं समवायानभ्युपगमात् । नापि गुणाश्रयः ब्रह्मणो निर्गुणत्वादित्युक्तत्वादित्यर्थः ॥

म० प्र०-( पूर्वमतेति ) ईश्वरस्य प्रतिबिंबस्वरूपत्वमतेत्यर्थः । अत्रमते-ईश्वरस्य-बिंबस्वरूपत्वमते । परममूले ( प्रतिबिंबपक्षपातित्वादिति ) प्रतिबिंबेस्वधर्माधायकत्वादित्यर्थः । श्यामावदातत्वादिकं-दर्पणगतमलिनत्वशुद्धत्वादिकम् । भेदः-जीवेश्वरभेदः । परममूले ( भेदइति ) कल्पितभेदइत्यर्थः । परममूले ( दर्पणप्रदेशइवेति ) दर्पणप्रदेशेऽभाव इवेत्यर्थः । परममूले ( तस्येति ) बिंबचैतन्यस्वरूपपरमेश्वरस्येत्यर्थः । तत्र-जलादौ । अन्याकाशस्यैव-महाकाशान्यघटाद्याकाशस्यैवतत्र-जलादौ प्रतिबिंबत इति शेषः । नमहाकाशः-जलादौ प्रतिबिंबते इति शेषः । प्रत्यभिज्ञाविरोधात् महाकाशएव जले प्रतिबिंबिताकाश इति प्रत्यभिज्ञाविरोधात् । परममूले ( आकाशस्येति ) महाकाशस्येत्यर्थः । परममूले ( दर्शनेनेति ) ज्ञानेनेत्यर्थः । परममूले ( तथात्वेति ) प्रतिबिंबितत्वेत्यर्थः तद्धि-आत्मस्वरूपंहि ॥

मू०-एकधाबहुधाचैव दृश्यते जलचंद्रवत् यथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना बहुधैकोनुगच्छनित्यादिवाक्येन ब्रह्मप्रतिबिंबाभावानुमानस्य बाधितत्वाच्च। तदेवं तत्पदार्थो निरूपित इदानीं त्वं पदार्थोनिरूप्यते एकजीववादे अविद्याप्रतिबिंबो जीवः ॥

शि०म०-ननु ब्रह्मणि कल्पितगुणांगीकारान्ननिर्गुणश्रुतिविरोधः । नचाकाशवद्ब्रह्मनरूपद्रव्यमपि प्रतिबिंबतामिति वाच्यं तत्राप्यभ्रनक्षत्रादेरेव रूपवतः प्रतिबिंबितत्वसंभवेन नीरूपाकाशप्रतिबिंबस्यासंभवादित्यत आह ( एकधेति ) तत्पदार्थनिरूपणमुपसंहरति ( तदेवमिति । अविद्याप्रतिबिंबइति ) एकैवाविद्या 'अजामेकाम्' इत्यादिश्रुतेः । नचेन्द्रो-

मायाभिरिति बहुवचनविरोधः। तस्य तद्गतशक्तिभेदपरत्वेन व्याख्यातत्वात्। तथाचाविद्योपाधेरेकत्वात्तत्प्रतिबिंबलक्षणोजीव एक इत्यर्थः। जीवैकत्वं च संप्रदायाध्वना स्थितमित्येतावतैव तत्पक्ष उपन्यस्तो नत्वयं पक्षो युक्तः। तथासति एकजीववादे अविद्याया एकत्वेन एकस्य मुक्तत्वेनेदानीं प्रपंचानुपलंभापत्तेः। पूर्वं मुक्त्यभावे वामदेवादिमुक्तिप्रतिपादकबहुवाक्यविरोधात्। वामदेवादीनामुत्पन्नब्रह्मसाक्षात्काराणामप्यमुक्तावर्वाचीनानामाषाढवाते चलति द्विपेन्द्रे चक्रीवतो वारिधिरेव काष्ठाइतिन्यायेन मुक्तिर्दूरोत्सारितास्यात्। नचैवं विवरणाचार्य्यैर्जीवैक्योक्तेस्तद्विरोध इति वाच्यम्॥

म० प्र०-( श्रुतिविरोधइति ) तथाच ब्रह्मणि कल्पितगुणांगीकारेण ब्रह्मणो द्रव्यत्वसिद्धिः नीरूपद्रव्यब्रह्मणः प्रतिबिंबाभावसिद्धिश्चेति शेषः। तत्रापि—जलादावपि ( आहेति ) ब्रह्मणो द्रव्यत्वाभ्युपगमेपि ब्रह्मप्रतिबिंवासंभवरूपदोषाभाव इत्यभिप्रेत्य हेत्वंतरमाहेत्यर्थः। परममूले ( एकधेति ) उपाधिरहितरूपेणैकरूपः सन् परमात्मा बहुधोपाधिना नानाजीवेश्वररूपो ज्ञायते इत्यर्थः। परममूले ( यथेति ) एकोयं विवस्वान् सूर्य्योभिन्ना आपोऽनुगच्छन् बहुधा भवतीति योजना अत्रादिपदेनोपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोयमात्मेति वाक्यशेषपरिग्रहः। तस्य—मायाभिरिति बहुवचनस्य ( तद्गतेति ) मायागतेत्यर्थः। परममूले ( ब्रह्मप्रतिबिंबाऽभावानुमानस्येति) ब्रह्म न प्रतिबिंबते अचाक्षुषत्वाद्गंधादिवदिति ब्रह्मप्रतिबिंबाभावानुमानस्येत्यर्थः। संप्रदायाध्वना—प्राचीनवाक्येन, स्थितम्—प्राप्तम् अयं पक्षो न युक्त इत्यत्र हेतुमाह ( एकजीववाद इत्यादिनेति ) ननु पूर्वं कस्यापि मुक्तिर्नजातेतीदानीं न प्रपंचानुपलंभापत्तिरित्याशंक्याह ( पूर्वमिति ) दोषांतरमाह ( वामदेवादीनामिति ) आषाढवाते इति आषाढवायुसंबद्धेद्विपेन्द्रेगजेंद्रे। चलति—इतस्ततोदोलायमानेसति, चक्रीवतो—रासभस्य वारिधिरेव समुद्रएव, काष्ठा—विश्रामावधिरित्यर्थः। तद्विरोधः—नानाजीववादस्य विवरणाचार्य्योक्त्यासहविरोधः॥

शि०म०-तदुक्ते जीवपदप्रतिपाद्य एक एवेति शास्त्रदृष्टजीवैक्यपरत्वात्। अन्यथा तद्वचनस्य लोकसिद्धजीवभेदप्रतिषेधकत्वे अनंतजीवनिर्भासास्पदमेकरसं ब्रह्मेत्यहंकारटीकायां पद्मपादाचार्य्यैर्जीवभेदस्याभिधानात् तद्विरोधापत्तेः। अत एव विवरणाचार्य्यैः। शारीरिकन्यायसंग्रहे ग्रंथांतरे देवताधिकरणे तद्यो यो देवानां प्रत्यबुद्ध्यत स एव तदभवत्। तथा ऋषीणां तथा मनुष्याणामिति वाक्योदाहरणेन यस्य ज्ञानं तस्यैव मुक्तिरित्युक्तमत एव यावदधिकारमवस्थितिराधिकारिकाणामित्यत्र वासिष्ठादीन् ब्रह्मज्ञानिन उदाहृत्य तेषां पौरोहित्याद्यधिकारलक्षणप्रारब्धपर्य्य-

तमवस्थानं तत ऊर्द्ध्वं मुक्तिरित्युक्तं तदेतत्पारमर्षसूत्रं 'भोगेन त्वितरेक्षपयित्वासंपद्यते' इति तस्माच्छ्रुतिसूत्रस्मृतिन्यायविरोधाज्जीवैकत्वप्रवादोयं नादर्त्तव्यः परीक्षकैः ॥

म० प्र०–तदुक्तेः–विवरणाचार्य्योक्तेः, एकएव–वस्तुत एकएव, अन्यथा–विवरणाचार्य्योक्तेः शास्त्रदृष्टजीवैक्यपरत्वानंगीकारे अन्यथेत्यस्यैव वाविवरणं तद्वचनस्येत्यादि, तद्वचनस्य–विवरणाचार्य्यवचनस्य निर्भासारूपदम्–प्रतीत्यधिकरणं, तद्विरोधापत्तेः–पद्मपादाचार्य्यवचनविरोधापत्तेः । अतएव–विवरणाचार्य्योक्तेर्जीवपदप्रतिपाद्यो वस्तुत एकएवेति शास्त्रदृष्टजीवैक्यपरत्वादेव । तत्–ब्रह्म यो यः देव इति शेषः । तदभवत्–ब्रह्माभवत् ( यावदधिकारमिति ) तृतीयाध्यायस्यं तृतीयपादस्य द्व्यधिकत्रिंशत्संख्याकमिदं सूत्रम् अस्यार्थः विदुषो वर्तमानदेहपाता नंतरं देहांतरप्राप्तिरस्ति नवेति संशये सत्यस्त्येवेति पूर्वपक्षः कुतः अपांतरतमवशिष्टसनत्कुमारादीनां निर्गुणब्रह्मविदामपांतरतमः कलिद्वापरयोः संधौ विष्णुनियोगात्कृष्णद्वैपायनः संबभूवेत्यादिना पुनः पुनरुत्पत्तिस्मरणादिति पूर्वपक्षे प्राप्ते सिद्धांतमाह ( यावदिति ) अधिकारिकाणामपांतरतमप्रभृतीनां वेदप्रवर्तनादिषु लोकव्यवस्थाहेतुष्वधिकारेषु परमात्मना नियुक्तानां, यावदधिकारमवस्थितिः–यावत्प्रारब्धकर्मावस्थितिः प्रारब्धकर्मणः प्रतिबंधकस्यानेकशरीरभोग्यफलहेतोः फलस्य भोगेन नाशे विदेहमुक्तिप्रतिबंधकांतराभावादनादिसंसारे संचितकर्मणां ज्ञाननाश्यत्वेनाप्रतिबंधकत्वादप्रतिबद्धः । साक्षात्कारो वर्तमानदेहपातानंतरं कैवल्यं संपादयतीति न देहांतरप्राप्तिरप्रतिबद्धात्मसाक्षात्कारवतः । तथैव श्रुतिः 'तस्यतावदेवचिरं यावन्न विमोक्ष्येथसंपत्स्य, इत्यप्रतिबद्धसाक्षात्कारवतः कैवल्यस्य वर्त्तमानदेहपातावधिं श्रावयतीति ( तदेतदिति ) तस्मिन्प्रकृतेऽर्थे एतदन्यदपीदंपारमर्षसूत्रमस्तीत्यर्थः । भोगेनेत्यादिसूत्रं हि चतुर्थाध्यायस्य प्रथमपादस्यैकोनविंशतिसंख्याकम् अस्यार्थः प्रारब्धकर्मणामनारब्धकार्य्ये एवत्वित्यत्र ज्ञानानिवर्त्त्यत्वेनोक्तानां निवृत्तिप्रकारमाह ( भोगेनेति ) किं ब्रह्मसाक्षात्कारवान् देहपातानंतरमपिसंसरति न वेति संशये देहपातात्पूर्वं यथासाक्षात्कारेपि संसारानुवृत्तिरेवंदेहपातानंतरमपिसंसारानुवृत्तिरिति पूर्वपक्षे प्राप्ते ब्रूमः संचितकर्मणां ज्ञानान्नाश उक्तः इतरेतु संचितक्रियमाणव्यतिरिक्तेआरब्धकार्य्येपुण्यपापेभोगेनक्षपयित्वाविद्वान् ब्रह्मसंपद्यते अथ संपत्स्ये ब्रह्मैवं सन् ब्रह्माप्येतीत्यादिश्रुतिभ्यः देहपातात्पूर्वं प्रारब्धकर्मणां सत्त्वात्कुलालचक्रभ्रमिन्यायेन मिथ्याज्ञानरूपनिमित्तनाशेप्यविद्यालेशानुवृत्तिर्युक्ता तद्भोगानंतरं कस्यचिदपि कर्मणो जन्ममरणलक्षणसंसारहेतोरभावान्नसंसारस्तस्माद्भोगेन प्रारब्धकर्मनाशानंतरं विद्वान् स्वरूपानंदात्मनावस्थानलक्षणं स्वास्थ्यंमोक्षाख्यं लभते इति सिद्धमिति ॥

मू०–अनेकजीववादेत्वन्तःकरणप्रतिबिंबः स च जाग्रत्स्वप्नसुषुप्तिरूपावस्थात्रयवान् ॥

शि०म०–जीवैकत्वमतेन जीवस्य लक्षणमुक्त्वा तदनेकत्वमतेन लक्षणमाह ( अनेकजीववादेत्विति ) अन्तःकरणे प्रतिबिंब एव जीवो नत्वविद्यावच्छिन्नइत्यर्थः । तदुपाधेरेकत्वेन जीवनानात्त्वानुपपत्तेः । नन्वविद्यावच्छिन्नो जीवः स च नानैव मायाभिरिति श्रुत्या तदुपाधेरनेकत्वावगमात । अजामित्येकवचनश्रुतेरेकं वनमितिवत्समुदायाभिप्रायत्वादितिचेन्न, कार्य्योपाधिरयं जीव इतिस्मृतिविरोधात् । किंच स्वमपीतो भवतीत्यादि श्रुतौ ब्रह्मण्यौपाधिको लयः श्रूयते जीवस्याविद्योपाधिकत्वे तद्वचनं न स्यात् अविद्यायास्तदाविनाशाभावात अपिचैवं जीवस्योत्क्रांतिगत्यागतयो नोपपद्येरन् अविद्याया व्यापकत्वेन तदवच्छिन्नस्य गत्याद्यनुपपत्तेः उपाधेः प्रतिबिंबपक्षपातित्वात्तत्कृतादोषाः प्रतिबिंब एव वर्तते इत्युक्तं तत्र केते दोषा इत्याकांक्षायामाह ( सचेति ) अवस्थात्रयवानित्युपलक्षणं तुरीयनामकावस्थांतरमादायावस्थाचतुष्टयवानिति द्रष्टव्यं नचैक एवात्मा मंतव्यो जाग्रत्स्वप्नसुषुप्तिष्वित्यमृतबिंदूपनिषद्वचनविरोधः तस्यावस्थांतरोपलक्षणार्थत्वात् । जाग्रत्स्वप्नसुषुप्त्यादि प्रपंचं यत्प्रकाशते इति कैवल्योपनिषदि आदिपदेन तस्याभिधानात सुबालोपनिषदि योयं विज्ञानघनउत्क्रामन् प्राणं वहतत्युपक्रम्य जागरितं स्वप्नं सुषुप्तं तुरीयं चेति तुरीयपदेनावस्थांतराभिधानात् । जाग्रत्स्वप्नः सुषुप्तिस्तुरीयमिति चतुर्विधावस्था इति शारीरकोपनिषदि स्पष्टमेवावस्थाचातुर्विध्यस्योक्तत्वाच्च । नच लक्षणतः सुषुप्त्यादावेवान्तर्भावः इति वाच्यम् । श्रुतिसिद्धविलक्षणावस्थांतरानुरोधेन तद्व्यावृत्तसुषुप्त्यादिलक्षणस्य सुषुप्त्यादिव्यावृत्तावस्थांतरलक्षणस्य चावश्यं कल्पनीयत्वात् प्रमाणसिद्धस्यलक्षणेन निवर्त्तनायोगात । नचैवं मूर्च्छामरणाभ्यां षड्विधाः स्युरवस्था इति वाच्यम् । तयोरवस्थांतरत्वे प्रमाणाभावादिति दिक् ॥

म०प्र०–तदुपाधेः–अविद्यारूपजीवोपाधेः ( स्वमपीतइति ) अत्र स्वशब्देन सच्छब्दवाच्यात्मापरामृश्यते तथा च स्वं स्वं प्रति सच्छब्दवाच्ये आत्मानि अपीतो भवति–जीवो लीनो भवति अपि पूर्वस्य एते लयार्थत्वात्सुषुप्त्यवस्थायामुपाधिलयेनोपाधिकृत विशेषाभावात् । स्वात्मनि सच्छब्दवाच्ये जीवः मलीन इवेत्यर्थः । तद्वचनं–स्वमपीत इति वचनं, उत्क्रांतिगत्यागतयः–चरमदेहप्राणवियोगोत्तरैतद्देहजीववियोगगमनागम-

नानि, प्रतिबिंबपक्षपातित्वात्–प्रतिबिंबेस्वधर्माधायकत्वात्, तत्कृताः–उपाधिकृताः । तस्य–अमृतबिंदूपनिषद्वचनस्य, तस्य–तुरीयनामकावस्थांतरस्य, उत्क्रामन्–देहाद्बहिर्गच्छन् प्राणं वहति प्राणं कक्षीकृत्यगच्छति, तद्वयावृत्तेति–तुरीयावस्थाऽवृत्तीत्यर्थः। सुषुप्त्यादिव्यावृत्तावस्थांतरलक्षणस्य–सकलोपाधितादात्म्याध्यासनिवृत्तिकालत्वरूपसुषुप्त्याद्यवृत्तितुरीयावस्थालक्षणस्य, कल्पनीयत्वात्–ऊह्यत्वात्, कल्पनीयत्वेहेतुमाह ( प्रमाणसिद्धस्येति ) तुरीयनामकावस्थांतरस्येतिशेषः । लक्षणेन–तुरीयावस्थावृत्तिसुषुप्त्यादिलक्षणेन–एवं–तुरीयनामकावस्थांतरस्वीकारे सति तयोः मूर्च्छामरणयोः ॥

मू०–तत्र जाग्रद्दशानाम इन्द्रियजन्यज्ञानावस्था अवस्थांतरे इन्द्रियाभावान्नातिव्याप्तिः इंद्रियजन्यज्ञानं चान्तःकरणवृत्तिः स्वरूपज्ञानस्यानादित्वात् साचान्तःकरणवृत्तिरावरणाभिभवार्थेत्येकं मतं तथाहि अविद्योपहितचैतन्यस्य जीवत्वपक्षे घटाद्यधिष्ठानचैतन्यस्य ॥

शि० म०–तत्र जाग्रदवस्थां निरूपयति ( तत्रेति । इंद्रियजन्येति ) इन्द्रियजन्यज्ञानोपलक्षितकालो जाग्रदित्यर्थः । तेन जाग्रतिसुखाद्यनुभवकाले औदासीन्यकालेच तद्विशिष्टत्वाभावान्नासंभवः इंद्रियपदव्यावर्त्यमाह ( अवस्थांतरइति ) सुषुप्तावित्यर्थः । नचैवमपि स्वप्नेऽतिव्याप्तिः तत्रेन्द्रियसत्त्वेपि तद्व्यापारोपरमादिति भावः । ननु सुषुप्ताविन्द्रियसद्भावपक्षेतत्रातिव्याप्तिरित्याशंक्य किमविद्यावृत्तिमादाय तत्रातिव्याप्तिः उतस्वरूपज्ञानमादाय नाद्यः जाग्रति जायमानबाह्यगोचरान्तःकरणवृत्तेरेवेन्द्रियजन्यत्वेन सर्वोपरमलक्षणसुषुप्तिकालवृत्त्यविद्यावृत्तेस्तज्जन्यत्वाभावादित्याह ( इंद्रियजन्यज्ञानंचेति ) द्वितीयं दूषयति ( स्वरूपज्ञानस्येति ) ननु निष्प्रयोजनेयमंतःकरणवृत्तिरतो नापेक्षा स्यादित्यत आह ( साचेति ) ननु चैतन्यप्रकाशसंबंधेनैव घटादिस्फुरणोपपत्तेर्नावरणभंगार्थावृत्तिरित्याशंक्य किं शुद्धचैतन्यं विषयावभासकमुतेश्वरचैतन्यं जीवचैतन्यं वा नाद्यः शास्त्राद्ब्रह्मणो निर्विकारत्वेन विषयानवभासकत्वात न द्वितीयः कल्पितबिंबभावस्यचैतन्यस्य विषयप्रकाशकत्वे तेन जीवस्य व्यावहारिकभेदेन मयावगतमिति घटसंबंधानवभासप्रसंगात् । सर्वदा सर्वविषयावभासापाताच्च ! न तृतीयः अंतःकरणावच्छिन्नो जीव इति पक्षे तस्य घटादिसंबंधाभावेनानवभासकत्वात् !

अविद्याप्रतिबिंबः सर्वगतो जीव इति पक्षे तस्यावभासकत्वमिति चेत्तत्राह ( तथाहीति ) ॥

म०प्र०–तत्र–जाग्रदाद्यवस्थात्रयमध्ये ( उपलक्षितकालइति ) कदाचित्संबंधिव्यावर्त्तकरूपोपलक्षणव्यावर्त्यकाल इत्यर्थः । तेन–इंद्रियेत्यादिमूलवाक्यस्योक्तार्थकत्वेन ( तद्विशिष्टत्वाभावादिति ) व्यावहारिकेन्द्रियजन्यज्ञानसंबंधाभावात्प्राप्तो योऽसंभवोऽव्याप्तिः सा नास्तीत्यर्थः । एवमपि–सुषुप्तावतिव्याप्त्यभावेपि ( स्वप्नेतिव्याप्तिरिति ) स्वप्ने इंद्रियाणां सत्त्वेन स्वप्नस्यापीन्द्रियजन्यज्ञानकालत्वादिति शेषः । नचेति प्रतिज्ञायां हेतुमाह ( तत्रेति ) तद्व्यापारेति व्यावहारिकेन्द्रियव्यापारेत्यर्थः । तत्र–सुषुप्तौ ( तज्जन्यत्वेति ) इन्द्रियजन्यत्वेत्यर्थः । अतः–वृत्तिप्रयोजनाभावात्, अपेक्षा–वृत्त्यभ्युपगमः, शास्त्रात्–असंगोह्ययं पुरुष इत्यादि शास्त्रात्, तेन–कल्पितबिंबभावेश्वरचैतन्येन सह ( मयेति ) घटादिकं वस्तु मयावगतमित्यस्मदर्थजीवेन सह वहिर्घटाद्यर्थस्य यः संबंधावभासस्तदभावापातादित्यर्थः । ननु जीवस्य वस्तुत ईश्वरचैतन्याभेदात्कथं मयावगतमिति घटसंबंधानवभासप्रसंग इत्याशंक्याह ( सर्वदेति ) तस्य–जीवस्य ॥

मू०–जीवरूपतया जीवस्य सर्वदा घटादिभानप्रसक्तौ घटाद्यवच्छिन्नचैतन्यावरकमज्ञानं मूलाविद्यापरतंत्रमवस्थापदवाच्यमभ्युपगंतव्यम् एवं सति सर्वदा न घटादेर्भानप्रसंगः अनावृत्तचैतन्यस्यैव भानप्रयोजकत्वात् तस्य चावरणस्य सदातनत्वे कदाचिदपि घटादिभानं न स्यादिति तद्भंगे वक्तव्ये ॥

शि० म०–( जीवरूपतयेति ) तदुपाध्योर्घटाविद्ययोरेकदेशस्थत्वाभावः । ननु घटाद्यावरकस्य मूलाज्ञानादत्यंतभेदेन नानाऽज्ञानापत्तावेकाज्ञानश्रुतिविरोध इत्याशंक्य तत्तद्विषयावरणस्य मूलाज्ञानगतशक्तिभेदतया तत्पारतंत्र्यान्नात्यंतभेद इत्याह ( मूलाविद्येति ) अतएवोक्तं विवरणाचार्य्यैः मूलाज्ञानस्यैवावस्थाभेदा रजताद्युपादानानीति । नन्वस्तु घटादिचैतन्यावरकमज्ञानं ततः किमित्यत आह ( एवंसतीति ) तथापि कथं न भानं लाघवेन चैतन्यस्यैव विषयावभासकत्वादित्याशंक्य रूपप्रत्यक्षज्ञानसमये घटतद्गतपरिमाणादिग्रहापत्त्या तत्तद्विषयावरणभंगविशिष्टचैतन्यस्यैव वाच्यतया गौरवस्यापि प्रामाणिकत्वादित्याह

( अनावृत्तेति ) ननु घटादिविषयावरणं ब्रह्मावरणवत् संसारदशायामनिवर्त्यमावरणत्वादित्याशंक्य तद्वदेवेदानीं न भानप्रसंग इत्याह ( तस्येति ) ॥

म० प्र०—तदुपाध्योः—घटावच्छिन्नचैतन्याविद्यावच्छिन्नचैतन्योपाध्योः ( एकदेशेति ) शुद्धचेतनरूपैकदेशेत्यर्थः । घटाद्यावरकस्य—अवस्थापदवाच्यघटाद्यावरकाज्ञानस्य । एकाज्ञानश्रुतिविरोधः—अजामेकामित्याद्येकाज्ञानबोधकश्रुतिविरोधः, मूलाज्ञानगतशक्तिभेदतया—वह्निगतदाहकत्वप्रकाशकत्वाद्यनुकूलसामर्थ्यविशेषवन्मूलाज्ञानगतशक्तिविशेषतया, तत्पारतंत्र्यात्—मूलाज्ञानान्वयव्यतिरेकप्रयोज्यान्वयव्यतिरेकवत्त्वात्, नात्यंतभेदः—मूलाज्ञानादत्यंतभेदो न, अवस्थाभेदाः—अंशविशेषाः, ततः—घटादिचैतन्यावरकाज्ञानात् । किम्—कीदृशं फलं, लाघवेन—अनावृतचैतन्यस्य विषयभासकत्वापेक्षया चैतन्यमात्रस्य विषयावभासकत्वस्वीकारे लाघवेन, वाच्यतया—तत्तद्विषयभासकत्वं वक्तुमर्हतया ( प्रामाणिकत्वादिति ) तत्तद्विषयावरणभंगविशिष्टचैतन्यस्य विषयभासकत्वं विनारूपप्रत्यक्षसमये घटतद्गतपरिमाणादेरप्रत्यक्षत्वमनुपपन्नं सत्तत्तद्विषयावरणभंगविशिष्टचैतन्यस्य भासकत्वं कल्पयतीत्यर्थापत्तिसिद्धतयेत्यर्थः । तद्वदेव—ब्रह्मवदेव, इदानीं—संसारदशायाम् । न भासप्रसंगः—घटादीनां प्रत्यक्षत्वं न स्यात् ॥

मू०—तद्भंगजनकं चैतन्यमात्रं तद्भासकस्य तदनिवर्त्तकत्वात् नापि वृत्त्युपहितं चैतन्यं परोक्षस्थलेपि तन्निवृत्त्यापत्तेरिति परोक्षव्यावृत्तवृत्तिविशेषस्य तदुपहितचैतन्यस्य वाऽऽवरणभंगजनकत्वमित्यावरणाभिभवार्थावृत्तिरित्युच्यते । संबंधार्थावृत्तिरित्यपरंमतं तत्राप्यविद्योपाधिकोऽपरिच्छिन्नो जीवः ॥

शि० म०—ननु आवरणभंगस्यापि चैतन्येनैवोपपत्तेः न तथा वृत्तिरित्याशंक्य किंचैतन्यमात्रं तन्निवर्तकं विशिष्टचैतन्यं वा नाद्य इत्याह ( तद्भंगजनकमिति । तद्भासकस्येति ) यद्यपि तृणादिप्रकाशकस्याप्यग्नेस्तन्नाशकत्वदर्शनान्नभासकत्वनिवर्त्तकत्वयोर्विरोधस्तथापि घटस्फुरणात्पूर्वंतत्सत्त्वेपि तदावरणभानस्यैव दर्शनेनान्वयव्यभिचारात्ननिवर्त्तकमित्यत्र तात्पर्य्यम् । द्वितीयं दूषयति ( नापीति । वृत्तिविशेषस्येति ) यावृत्तिर्यद्विषया प्रत्यक्षा सातदावरणभंजिकेत्यर्थः । ननु वृत्तिर्न निवर्त्तिका यतो ज्ञानमज्ञाननिवर्त्तकं मुख्यज्ञानस्यैव निवर्त्तकत्वाभ्युपग-

मादित्यत आह ( तदुपहितेति ) अस्मिन्पक्षे तु वृत्तेरवच्छेदकतया तन्निवृत्तिप्रयोजकत्वमिति बोध्यम् उपसंहरति ( इत्यावरणाभिभवार्थेति ) आवरणाभिभवो नाम चितः प्रतिबिंब इत्येके आवरणशक्तिनाश इत्यन्ये तत्प्रतिबंध इत्यपरे खद्योतादिप्रकाशे महांधकारस्येवाज्ञानस्यैकदेशेन नाश इति संप्रदायविदः। तदुक्तं तत्त्वदीपने प्रतिकर्मव्यवस्थायामावरणाभिभवशब्देनावच्छिन्नात्माऽज्ञाननिवृत्तिरिति जीवस्य परिच्छिन्नत्वपक्षे वृत्तेः संबंधार्थत्वस्य सुनिरूप्यत्वादपरिच्छिन्नत्व पक्षे तावत्तदुपपादयति ( तत्रेति )॥

म०प्र०—नतथावृत्तिः—आवरणभंगार्थावृत्तिर्न स्वीकार्य्या । विशिष्टचैतन्यं—वृत्त्युपहितचैतन्यं परममूले ( तद्भासकस्येति ) आवरणभासकस्येत्यर्थः । परममूले (तदनिवर्त्तकत्वादिति ) आवरणानिवर्त्तकत्वात् । यत्र यद्भासकत्वं तत्र तदनिवर्तकत्वमिति व्याप्तेरित्यर्थः । उक्तव्याप्तेर्भंगमाशंक्य मूलवाक्यस्य तात्पर्य्यमाह ( यद्यपीत्यादिना । तन्नाशकत्वेति ) तृणादिनाशकत्वेत्यर्थः । घटस्फुरणात्पूर्वम्—घटादिज्ञानात्पूर्वम् तत्सत्त्वेपि—चैतन्यमात्रसत्त्वेपि ( तदावरणेति ) घटाद्यावरणेत्यर्थः । अन्वयव्यभिचारात्—चैतन्यमात्रसत्त्वेप्यावरणनाशरूपकार्य्याभावदर्शनात् । परममूले ( तन्निवृत्त्यापत्तेरिति ) अभानापादकावरणनिवृत्त्यापत्तेरित्यर्थः । अस्मिन्पक्षे—वृत्त्युपहितचैतन्यस्यावरणभंगजनकत्वमिति पक्षे, तन्निवृत्तिप्रयोजकत्वम्—आवरणनिवृत्तिकारणत्वम्, चितःप्रतिबिंबः—वृत्तिविशिष्टघटादौ चितोऽभिव्यक्तत्वं यथागजकीयजनानां मध्ये एकस्याधिकारेऽपरस्थापनमेवैकस्य तिरस्कारस्तथा घटादौ चैतन्यप्रतिबिंब एव घटादिविषयकावरणाभिभव इति भावः । तत्प्रतिबंधः—आवरणस्य स्वकार्य्याक्षमत्वरूपनिरोधः आवरणापसारणं वा तत्त्वदीपने—चतुःसूत्रीव्याख्यानपंचपादिकाव्याख्यानविवरणव्याख्याने, प्रतिकर्मव्यवस्थायाम्—कस्यचित्पुंसः कदाचिदेव कश्चिदेवपदार्थः ज्ञानकर्म नसर्वस्य सर्वदा सर्वइति प्रतिनियतकर्मव्यवस्थायाम् ( अवच्छिन्नेति ) घटाद्यवच्छिन्नेत्यर्थः । सुनिरूपत्वात्—शरीरान्तः जीवस्य बाह्यघटादिसंबंधस्य वृत्तिविनाऽसंभवाद्वृत्तेः संबंधार्थत्वस्येष्टत्वात् ॥

मू०—स च घटादिप्रदेशो विद्यमानोपि घटाद्याकारापरोक्षवृत्तिविरहदशायां न घटादिकमवभासयति । घटादिना संबंधाभावात् तत्तदाकारवृत्तिदशायां तु भासयति तदा संबंधसत्त्वात्तुानन्यविद्योपाधिकस्यापरिच्छिन्नजीवस्य स्वत-

एव समस्तवस्तुसंबद्धस्य वृत्तिविरहदशायां संबंधाभावाभिधानमसंगतम्, असंगत्वदृष्ट्या च संबंधाभावाभिधाने वृत्त्यनंतरमपि संबंधो न स्यादिति चेत् उच्यते, नहि वृत्तिविरहदशायां जीवस्य घटादिना सह संबंधसामान्यं निषेधामहे; किं तर्हि घटभानप्रयोजकं संबंधविशेषं स च संबंधविशेषो विषयस्य जीवचैतन्यस्य च व्यंग्यव्यंजकभावलक्षणः कदाचित्कस्तदाकारवृत्तिनिबंधनः ॥

शि० म०–नन्वपरिच्छिन्नत्वपक्षे जीवस्याविद्योपाधिवत्सकलसंयोगितया कथं तत्संबंधार्थावृत्तिरित्याशंक्य संबंधसत्त्वेपि घटादिभानप्रयोजकसंबंधाभावात्तदर्थावृत्तिरित्याशयेनाह ( सचेति ) आशयमविद्वान् शंकते ( नन्विति ) वृत्तिविरहदशायां संबंधाभावादित्येतत्संबंधसामान्यनिषेधपरं पारमार्थिकतन्निषेधपरं वा तत्राद्यं निराकृत्य द्वितीयं निरस्यति ( असंगत्वेति ) असंगो नहि सज्जते इत्यादिश्रुत्यापारमार्थिकप्रपंचसंबंधनिषेधावगमादित्यर्थः । ( संबंधोनस्यादिति ) पारमार्थिक इति शेषः। स्वाशयमुद्घाटयति ( नहीति ) ननु घटादिस्फुरणप्रयोजको न संयोगोऽतिप्रसंगात्। नापि समवायः अनभ्युपगमात् । अभ्युपगमेवा तस्य नित्यत्वादित्यत आह ( सचेति व्यंग्येति ) जीवस्य घटादिभासकत्वे तदाकारवृत्त्युपहितत्वं तद्भास्यत्वे घटादेस्तदुपाधिवृत्तिविषयत्वं प्रयोजकमित्यर्थः ॥

म० प्र०–( अविद्योपाधिवदिति ) अविद्योपाधेर्यथा सकलकार्यसंबंधित्वंतद्वदित्यर्थः। अविद्योपाधिना सह यथा जीवसंबंधस्तद्वदिति वार्थः । तत्संबंधार्था–जीवसंबंधार्था, संबंधसत्त्वेपि–जीवचैतन्यस्य घटादिना सह घटादिनिष्ठाधेयतानिरूपिताधिष्ठानत्वाख्यसंबंधसत्त्वेपि ( घटादिभानप्रयोजकेति ) वक्ष्यमाणव्यंग्यव्यंजकभावलक्षणेत्यर्थः। तदर्था–व्यंग्यव्यंजकभावलक्षणजीवसंबंधार्था, आशयम्–व्यंग्यव्यंजकभावलक्षणसंबंधविशेषनिषेधविषयकाशयम्, इत्येतत्–वाक्यमितिशेषः (संबंधासामान्येति) कल्पिताकल्पितविभागशून्यसंबंधत्वावच्छिन्नसंबंधेत्यर्थः ( तन्निषेधेति ) संबंधानिषेधेत्यर्थः तस्य–समवायस्य ( नित्यत्वादिति ) वृत्तेर्वैयर्थ्यमिति शेषः । घटादिभासकत्वे–घटादिज्ञातृत्वे। तदाकारवृत्त्युपहितत्वं–घटाद्याकारवृत्तिबिंबितत्वम्। तद्भास्यत्वे–जीवभास्यत्वे ( तदुपाधिवृत्तीति ) जीवोपाध्यन्तःकरणादिवृत्तीत्यर्थः ॥

मू०—तथाहि तैजसमन्तःकरणं स्वच्छद्रव्यत्वात्स्वत एव जीवचैतन्याभिव्यंजनसमर्थं घटादिकं तु न तथा अस्वच्छद्रव्यत्वात् स्वाकारवृत्तिसंयोगदशायां तु वृत्त्यभिभूतजाड्यधर्मकतया वृत्त्युत्पादितचैतन्याभिव्यंजनयोग्यताश्रयतयाच वृत्त्युदयानंतरं चैतन्यमभिव्यनक्ति तदुक्तं विवरणे अन्तःकरणं हि स्वस्मिन्निव स्वसंसर्गिण्यपि घटादौ चैतन्याभिव्यक्तियोग्यतामापादयति दृष्टं चास्वच्छद्रव्यस्यापिस्वच्छद्रव्यसंबंधदशायां प्रतिबिंबग्राहित्वं यथा कुड्यादेर्जलादिसंयोगदशायां मुखादिप्रतिबिंबग्राहिता घटादेरभिव्यंजकत्वं च तत्प्रतिबिंबग्राहित्वं चैतन्याभिव्यक्तत्वं च तत्र प्रतिबिंबितत्वम् ॥

शि० म०—ननु चैतन्यवद्वृत्तिरपि यदि प्रकाशस्वभावा तर्हि सैवास्तु घटप्रकाशिका किंचैतन्येन जडात्मिकाचेत्तर्हि वस्त्रादिनेव तया घटादेरावरणापत्तेरित्याशंक्य सवितृकिरणस्य दर्पणसंबंधेनेवात्यच्छान्तःकरणसंबंधाच्चैतन्यस्य विषयप्रकाशकत्वमुपपद्यते इत्याह ( तथाहीति ) तर्हि घटादेरस्वच्छतयानवभासकत्वे विषयस्यापरोक्षस्थलेभिव्यंजकत्वाभ्युपगमो विरुद्धयेतेत्यत आह ( स्वाकारवृत्तीति ) चैतन्यमभिव्यनक्तीत्यत्र घटादिकमित्यनुषंगः। ननु यस्य स्वच्छता तस्यैवान्तःकरणस्य व्यंजकता ननु तत्संयोगिनो विषयस्येत्यत आह ( दृष्टंचेति ) ननु घटादेर्नचैतन्याभिव्यंजकत्वमिन्द्रियादेरेव साक्षात्कारणत्वेन व्यंजकत्वात्। नचालोकवद्घटावच्छिन्नचैतन्यगोचराज्ञानलक्षणतमोनिवर्तकतया विषयस्य व्यंजकत्वमिति वाच्यम्। वृत्तेरेवावरणनिवर्तकत्वेनोक्तत्वादित्याशंक्याह ( घटादेरिति ) ॥

म० प्र०—तर्हि—वृत्तेः प्रकाशस्वभावत्वे सैव वृत्तिरेव, तर्हि—वृत्तेर्जडात्मकत्वे। घटादेः घटाद्यवच्छिन्नचैतन्यस्य ( सवितृकिरणस्येति ) यथा सवितृदीपादिकिरणानां दर्पणादिसंबंधेन विशेषेण घटादिभासकत्वं ननु दर्पणादेः सवित्रादिकिरणावरकत्वं यथा वा नयनकिरणानामुपनेत्रसंबंधद्वारा विशेषेण रेखादिप्रकाशकत्वं ननूपनेत्रस्य नयनकिरणोपरोधकत्वं तथा स्वच्छान्तःकरणसंबंधेन घटादिचैतन्यस्य घटादिविष-

यप्रकाशकत्वंनत्वंतःकरणस्यघटादिचैतन्यावरकत्वमित्यर्थः । परममूले ( स्वतए-वेति ) स्वरूपेणैवेत्यर्थः परममूले ( अभिव्यंजनेति ) प्रतिबिंबग्राहित्वेत्यर्थः । तर्हीत्य-स्यैवानभासकत्वेत्यंतं विवरणम्, अनवभासकत्वे-अनभिव्यंजकत्वे ( इत्यनुषंगइति ) तथाच चैतन्यप्रतिबिंबग्राहित्वानुकूलव्यापारवद्घटादिकमित्यर्थः । तत्संयोगिनः-अन्तःकरणसंबंधिनः ( साक्षादिति ) घटाद्यपरोक्षज्ञानेत्यर्थः । परममूले ( तत्प्रतिबिं-बेति ) चैतन्यप्रतिबिंबेत्यर्थः ॥

मू०—एवंविधाभिव्यंजकत्वसिद्ध्यर्थमेव वृत्तेरपरोक्षस्थले बहि-र्निर्गमनांगीकारः परोक्षस्थलेतु वह्न्यादेर्वृत्तिसंयोगाभावे-न चैतन्यानभिव्यंजकतया नापरोक्षत्वं तन्मते विषयाणा-मपरोक्षत्वं चैतन्याभिव्यंजकत्वमिति द्रष्टव्यम् । एवं जीव-स्यापरिच्छिन्नत्वेपि वृत्तेः संबंधार्थत्वं निरूपितमिदानीं परिच्छिन्नत्वपक्षे संबंधार्थत्वं निरूप्यते । तथाहि अन्तः-करणोपाधिको जीवः ॥

शि० म०—ननु वृत्तिविषयस्य घटादेः कथं वृत्तिसंयोगादिवशादभि-व्यंजकत्वं लाघवेन वृत्तिसंबधस्यैव तत्प्रयोजकत्वोपपत्तेरित्यत आह ( एवंविधेति ) अन्यथा संबंधमात्रस्य चैतन्याभिव्यंजकत्वप्रयोजकत्वे वृत्तेरपरोक्षस्थले बहिर्निर्गमनवैयर्थ्यापत्तेरिति भावः । किंच तत्संबंधमा-त्रस्यप्रयोजकत्वे परोक्षस्थले वह्न्यादेरपि वृत्तिविषयतया तत्संबंधित्वे-नापरोक्षत्वापत्तिः वृत्तिसंयोगस्य प्रयोजकत्वे तु नायं दोष इत्याह ( परोक्षेति ) ननु संबंधस्यप्रयोजकत्वे वह्न्यादेरभिव्यंजकत्वेपि नापरोक्षत्वं संविदभिन्नत्वस्य विषयप्रत्यक्षलक्षणत्वेनोक्तस्य तत्राभावादित्यत आह ( एतन्मतेति ) ॥

म० प्र०—कथं-केन हेतुना, लाघवेन-वृत्तिसंबद्धघटादेश्चैतन्याभिव्यंजकत्वापेक्षया। वृत्तिसंबंधस्य चैतन्याभिव्यंजकत्वे लघुत्वेन, तत्प्रयोजकत्वोपपत्तेः-वृत्तिसंबंधसत्त्वे घटादौ चैतन्याभिव्यक्तिः वृत्तिसंबंधाभावे घटादिचैतन्याभिव्यक्त्यभाव इति वृत्ति-संबंधस्यैव घटादिचैतन्याभिव्यंजकत्वकारणत्वोपपत्तेः, अन्यथा-वृत्तिसंबद्धघटादेरभि-व्यंजकत्वानंगीकारे । संबंधमात्रस्य-विषयविषयीभावादिसंबंधसामान्यस्य, तत्संबं-धमात्रस्य-वृत्तिसंबंधसामान्यस्य, प्रयोजकत्वे-घटादिविषयचैतन्याभिव्यंजकत्वकार-णत्वे ( परोक्षस्थलेइति ) परोक्षपर्वताद्यधिकरणे इत्यर्थः ( वह्न्यादेरपीति ) वह्न्या-

देरप्यपरोक्षत्वापत्तिरित्यन्वयः तत्र हेतुमाह ( वृत्तिविषयतयातत्संबंधित्वेनेति ) वह्न्या-देर्वृत्तिविषयताभिन्नो यो वृत्तिसंबंधस्तद्वत्त्वेनेत्यर्थः ( नायंदोषइति ) चैतन्यविषययो-र्व्यंग्यव्यंजकभावलक्षणसंबंधविशेषार्थावृत्तिरंगीकृता वृत्तिरपि संयोगादिसंबंधविशेषे-णैव चैतन्यविषययोर्व्यंग्यव्यंजकभावलक्षणसंबंधविशेषप्रयोजिका नतु विषयविषयिभा-वादिसंबंधसामान्येन चैतन्यविषययोर्व्यंग्यव्यंजकभावलक्षणसंबंधस्य प्रयोजिका विष-यविषयिभावादिसंबंधसामान्येन वृत्तेश्चैतन्यविषययोर्व्यंग्यव्यंजकभावलक्षणसंबंधविशे-षप्रयोजकत्वांगीकारे तु परोक्षपर्वताद्यधिकरणे वह्न्यादावपि विषयतासंबंधेन वृत्तेः सत्त्वात्परोक्षस्थले वह्न्यादेरपि प्रत्यक्षत्वापत्तिरिति भावः । संबंधस्य—वृत्तेर्विषय-तादिसंबंधसामान्यस्य, प्रयोजकत्वे—यत्र वृत्तेर्विषयतादिसंबंधस्तत्र चैतन्याभिव्यं-जकत्वमिति वृत्तेर्विषयतादिसंबंधसामान्यस्य विषयचैतन्याभिव्यंजकत्वाव्याप्यत्वे, तत्र—वह्न्यादौ परममूले ( एतन्मतेइति ) चैतन्यविषययोर्व्यंग्यव्यंजकभावलक्षण-संबंधार्थावृत्तिरिति मते इत्यर्थः ॥

मू०—तस्य च घटाद्यनुपादानता घटादिदेशासंबंधात् किंतु ब्रह्मैव घटाद्युपादानं तस्य मायोपहितचैतन्यस्य सकल-घटाद्यन्वयित्वात् । अत एव ब्रह्मणः सर्वज्ञता तथाच जीवस्य घटाद्यधिष्ठानब्रह्मचैतन्याभेदमंतरेण घटाद्यवभा-सासंभवे प्राप्ते तदवभासाय घटाद्यधिष्ठानब्रह्मचैतन्याभे-दसिद्ध्यर्थं घटाद्याकारवृत्तिरिष्यते । ननु वृत्त्यापि कथं प्रमातृविषयचैतन्ययोरभेदः संपाद्यते घटान्तःकरणरूपो-पाधिभेदेन तदवच्छिन्नचैतन्ययोरभेदासंभवादिति चेन्न वृत्तेर्बहिर्देशनिर्गमनांगीकारेण वृत्त्यन्तःकरणविषयाणामे-कदेशस्थत्वेनोपधेयभेदाभावस्योक्तत्वात् । एवमपरोक्ष-स्थले मतभेदेन वृत्तेर्विनियोग उपपादितः इंद्रियाजन्य-विषयगोचरापरोक्षान्तःकरणवृत्त्यवस्था स्वप्नावस्था जाग्र-दवस्थाव्याावृत्त्यर्थमिंद्रियाजन्येति अविद्यावृत्तिमत्यां सुषु-प्तावतिव्याप्तिवारणायान्तःकरणेति सुषुप्तिर्नामाविद्यागो-चराऽविद्यावृत्त्यवस्था ॥

वारे हे मैत्रेयि अमृतत्वममृतत्वसाधनमित्यर्थः । परममूले ( मैत्रेयीब्राह्मणेइति ) याज्ञवल्क्यस्य मैत्रेयीनामकस्वभार्यया सह संवादप्रकरणे इत्यर्थः । एतच्च-विधानादिति कथनं च, नियमविधिम्-श्रवणादिषु पक्षेऽप्राप्तस्य प्राप्तिविधायकनियमविधिम् । श्रवणादिषु नियमविध्यभ्युपगमे हेतुमाह ( अपूर्वविधित्वेति ) श्रवणादिषु प्रमाणांतराप्राप्तार्थप्रापकत्वरूपापूर्वविधित्वेत्यर्थः । श्रवणादिषु अपूर्वविधित्वायोगेहेतुमाह ( श्रवणस्येत्यादिना ) श्रवणस्य-दशमस्त्वमसीत्यादिवाक्यश्रवणस्य, योग्येति-प्रत्यक्षयोग्यदेवदत्तादिपुरुषेत्यर्थः ॥

शि० म०-अन्वयव्यतिरेकसहकृतप्रत्यक्षसिद्धतया ब्रह्मविचारेपि तन्मूलानुमानादेव ब्रह्मसाक्षात्कारहेतुत्वसिद्धेःअपूर्वविधित्वायोगात् । वस्तुतस्तत्र नियमोपि न संभवति व्यावर्त्याभावात् । तथाह्यात्मावाअरेश्रोतव्य इत्यत्र किं विषयनियम आत्मैव श्रोतव्य इति किंवा धात्वर्थनियमः श्रोतव्य एवेति अवहन्यादेवेतिवत् नाद्यः "तरति शोकमात्मवित्"इत्यादिश्रुत्या आत्मज्ञानस्यैव मोक्षहेतुत्वावगमेनानात्मविचारस्याप्राप्तेर्नापि द्वितीयः । मननादिविधिविरोधात् नचात्मज्ञानाय वेदांतवाक्यमेव विचारयेदिति नियमविध्याश्रयणे तेन पुराणवाक्यादिव्यावृत्तिसिद्धिरिति वाच्यम् । आत्मावा अरे द्रष्टव्य इत्यादिषु वेदांतवाक्यस्य पदार्थत्वेनाश्रवणात् पदार्थनियमेचातिप्रसंगात् ॥

बिभेत्यल्पश्रुताद्वेदः मामयंप्रहरिष्यति ।
इतिहासपुराणाभ्यां वेदंसमुपबृंहयेदिति ॥

संभवपर्वणिवेदार्थनिर्णयोपायत्वेनेतिहासपुराणयोरपि विचार्यत्वप्रतिपादनाच्च । किंच श्रवणं नामतात्पर्यावधारणं तदनुकूलामानसी क्रियावातदुभयं शाब्दज्ञानेहेतुः तत्र नियमविध्याश्रयणेश्रवणमेव शाब्दज्ञानहेतुर्नान्यदिति स्यात्तच्चनभवति आकांक्षादेस्तद्धेतुभूतस्यनिवृत्त्ययोगादन्यस्यव्यावर्त्यस्यासिद्धेः । नचैवं श्रवणस्यशाब्दज्ञानहेतुत्वेदर्शनोद्देशेन श्रवणं विधीयते इत्यसंगतंस्यादिति वाच्यम् सिद्धांते शाब्दज्ञानस्यापरोक्षरूपतया विरोधाभावात् ॥

म०प्र०-( अन्वयव्यतिरेकेति ) अव्यवहितयोग्यार्थशब्दश्रवणसत्त्वे श्रूयमाणाव्यवहितयोग्यार्थसाक्षात्कारः तदभावे तदभाव इत्यन्वयव्यतिरेकेत्यर्थः । प्रत्यक्षसिद्धतया-मानसप्रत्यक्षसिद्धतया साक्षिरूपप्रत्यक्षसिद्धतया वा ब्रह्मविचारेपि ब्रह्मश्रवणेपि, तन्मूलानुमानादेव-अधिकारिनिष्ठब्रह्मप्रतिपादकवाक्यश्रवणं ब्रह्मसाक्षात्कारजनकंयोग्याव्यवहितार्थकशब्दश्रवणत्वात् यत्र योग्याव्यवहितार्थकशब्दश्रवणत्वं तत्र योग्याव्यवहितार्थसाक्षात्कारजनकत्वमिति सामान्यव्याप्तौ दशमस्त्वमसीत्यादिवाक्य-

श्रवणवदिति प्रत्यक्षमूलकानुमानादेव, तत्र-श्रवणादिषु, नियमोपि-नियमविधिरपि ( किंविषयनियमइति ) आत्मैव श्रोतव्य इति श्रवणविषये किं नियम इत्यर्थः ( अनात्मविचारस्याप्राप्तेरिति ) यद्यपिरागादनात्मश्रवणप्राप्तिरस्ति तथापि मोक्षफलकानात्मश्रवणस्य रागादप्राप्तेर्व्यावर्त्याभावः एकफलकोभयप्राप्तावेव नियमविधिस्वीकारादितिभावः। तेन-नियमेन, अपदार्थनियमे-श्रोतव्य इत्यत्रापदार्थवेदांतवाक्ये नियमस्वीकारे, अतिप्रसंगात्-अपदार्थत्वस्य तुल्यत्वेन पुराणवाक्यमेवविचारयेदिति नियमप्रसंगात्, समुपबृंहयेत्-संशयविपर्ययागोचरार्थप्रतिपादकतांनयेत् ( तदनुकूलेति ) तात्पर्यनिश्चयजनकेत्यर्थः। तत्र-उक्तश्रवणे, तत्र-श्रवणस्यैव शाब्दज्ञानहेतुत्वं च। नन्वाकांक्षाद्यन्यस्यैवैवकारेणव्यावृत्तिः स्यादित्याशंक्याह ( अन्यस्येति ) आकांशाद्यन्यस्येत्यर्थः। एवं-विधिंविनैव ( शाब्दज्ञानेति ) परोक्षशाब्दज्ञानेत्यर्थः। असंगतम्-शाब्दज्ञानस्य परोक्षत्वेनापरोक्षात्मज्ञानसाधनतयाश्रवणविधानमसंगतम् ॥

शि० म०-उक्तस्य श्रवणस्य तात्पर्यविषयकत्वेन परंपरया आत्मविषयतया श्रोतव्य इति निर्देशो न विरुध्यते किंच न वेदांतानां श्रवणादिविधिपरत्वं वाक्यभेदप्रसंगात्। अन्यथा ब्रह्मपरत्वाभावे ब्रह्मणोऽसिद्धिप्रसंगः। ननु सहकार्यंतरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवदित्यत्र श्रोतव्य इत्यादि वाक्यानां विधायकत्वांगीकारान्न तद्विरोध इति चेत न, पक्षेणेति वदता सूत्रकृता निपुणानां विध्यनपेक्षत्वं जडानां तु सर्वसंगपरित्यागपूर्वकब्रह्मज्ञाने प्रवृत्तिर्नस्यादिति तेषामेव प्रवृत्तिसिद्ध्यर्थंविध्यंगीकरणमिति सूचितम्। अन्यथा पक्षेणेति विशेषणवैयर्थ्यापत्तेः। नचानुवादवैयर्थ्यं तस्य ह्ययमौपनिषद आत्मा यतो मोक्षहेतुसाक्षात्कारसाधनविचारविषय इति प्रकारेणात्मनः ॥

म० प्र०-ननु श्रवणस्य तात्पर्यविषयकत्वेनाऽऽत्मविषयकत्वाभावादात्मसाक्षात्कारमनूद्य श्रोतव्य इति श्रवणं विधीयते इत्युक्तिरनुपपन्नेत्याशंक्याह ( उक्तस्येति ) तात्पर्यनिश्चयरूपस्य तात्पर्यनिश्चयानुकूलमानसीक्रियारूपस्यवेत्यर्थः। परंपरया-स्वविषयविषयत्वरूपपरंपरया, स्वं-श्रवणमिति संबंधघटकस्वशब्दार्थः। वेदान्तानाम्-मैत्रेयीब्राह्मणस्थश्रोतव्यइत्यादिवाक्यानां, वाक्यभेदप्रसंगात्-मैत्रेयीब्राह्मणस्थश्रोतव्य इत्यादिवाक्यानाम् श्रवणादिविधिपरत्वे ब्रह्मपरत्वेच विषयभेदसत्त्वेन वाक्यभेदप्रसंगात्, अन्यथा-श्रोतव्य इत्यादिवाक्यानाम् श्रवणादिविधिपरत्वस्वीकारे अन्यथेत्यस्यैव वा विवरणं ब्रह्मपरत्वाभावे इति, ब्रह्मणोऽसिद्धिप्रसंगः-मैत्रेयीब्राह्मणस्य ब्रह्मपरत्वाभावेन मैत्रेयींप्रति ब्रह्मविषयकनिश्चयाभावप्रसंगः ( सहकार्यंतरवि-

धिरिति ) इदं हि सूत्रं तृतीयाध्याये चतुर्थपादस्यतत्तचत्वारिंशत्संख्याकम् । अस्यार्थः बृहदारण्यके हि बाल्यं च पांडित्यं च निर्विद्याथ मुनिरमौनंच मौनंच निर्विद्याथ ब्राह्मण इति श्रूयते अत्र किंनिदिध्यासनाख्यं मौनं विधीयते नवेति संशयेऽत्र विध्यभावादश्रुतेर्मुनिरित्यत्र न मौनविधिरिति पूर्वपक्षे सिद्धांतमाह ( सहाकार्य्यंतरविधिरिति ) फलभूतसाक्षात्कारे श्रवणाद्यपेक्षाया सहकार्य्यंतरस्यमौनस्यानिदिध्यासनाख्यस्य विधिरित्यर्थः । ननुगार्हस्थ्यमाचार्य्यकुलं मौनंवानप्रस्थमित्यत्र मौनशब्दस्य पारिव्राज्ये प्रयोगात्कथमत्र मौनं निदिध्यासनं स्यादत आह ( तृतीयमिति ) श्रवणमननद्वयापेक्षया तृतीयं निदिध्यासनमेवात्रमौनं विधेयमित्यर्थः । कस्यायं मौनविधिस्तत्राह ( तद्वतइति ) ब्रह्मपरोक्षज्ञानवतः पूर्ववाक्ये प्रकृतस्य सन्यासिन इत्यर्थः । ननु सूक्ष्मवस्तुसाक्षात्कारहेतोः निदिध्यासनस्य प्राप्तत्वान्न विधेयत्वमत आह ( पक्षेणेति ) यस्मिन्पक्षेभेददर्शनप्राप्तिस्तस्मिन्पक्षे प्राप्त्यभावाद्विधिरर्थवानित्यर्थः । ननु ब्रह्मपरवाक्ये कथं मौनविधिरित्याशंक्य दृष्टांतमाह ( विध्यादिवदिति ) यथादर्शपूर्णमासप्रधानपरवाक्येऽन्वाधानादेरंगजातस्य विधिस्तद्वदित्यर्थः । प्रधानमारभ्यांगपर्य्यंतो विधिस्तस्यादिर्विध्यादिः प्रधानमिति यावदिति ( नतद्विरोधइति ) तस्य श्रवणादिविधेर्वाक्यभेदापत्त्यादिदोषैरनुपपत्तिर्नेत्यर्थः । तेषामेव—जडबुद्धीनामेव, अन्यथा—सर्वान्प्रतिविध्यंगीकारे ( विशेषणेति ) विशेषकथनेत्यर्थः । तस्य—अनुवादस्य ॥

श्रवणं नाम वेदांतानामद्वितीये ब्रह्मणि तात्पर्य्यावधारणानुकूलमानसी क्रिया । मननं नाम शब्दावधारितेर्थे मानांतरविरोधशंकायां तन्निराकरणानुकूलतर्कात्मज्ञानजनको मानसो व्यापारः । निदिध्यासनं नाम अनादिदुर्वासनया विषयेष्वाकृष्यमाणस्य चित्तस्य विषयेभ्योपकृष्यात्मविषयकस्थैर्य्यानुकूलो मानसो व्यापारः ॥

शि० म०—विष्णुरुपांशुयष्टव्य इतिवत्स्तुत्यर्थत्वेनोपपत्तेः अतएव भाष्यकृता समन्वयसूत्रे लिङादयः श्रूयमाणा अप्यनियोज्यविषयत्वात्कुण्ठीभवंतीत्युक्तम् । अत एव द्वितीयवर्णके टीकाकृता यद्येवं किंविधिनास्वयमेव विज्ञानहेतौ पुरुषार्थसाधने प्रवर्त्तत इतिविध्यभावः कण्ठरवेणांगीकृतः तत्रैव च विवरणाचार्य्यैर्निदिध्यासितव्य इति चात्मप्रतिपादनपरवाक्यस्यवाक्यभेदाभावाय स्तुतिपरत्वादित्युक्तम् । तस्मादर्हार्थे द्रष्टव्यपदसमभिव्याहारेण प्रदर्शितन्यायेन श्रोतव्य इत्यादेरप्यर्हार्थत्वमेव युक्तं न विधायकत्वमित्यास्तामतिविस्तरः । ननु दर्शनवच्छ्रवणादे

रपि ज्ञानतया नानुष्ठेयत्वमित्याशंक्य श्रवणादिस्वरूपं निरूपयति ( श्रवणंनामेत्यादिना ) ननु ध्यानस्य निदिध्यासनपदवेदनीयस्य ध्येयगोचरसाक्षात्कारकारणत्वेपि मननश्रवणयोर्नहेतुत्वं ध्यानेन ब्रह्मसात्कारोत्पत्तिसमये तयोरभावादित्याशंक्य नहि तेषामेकरूपेण हेतुत्वमिह विवक्षितं किंतु ध्यानस्यसाक्षात् ॥

म० प्र०-विष्णुरुपांशुयष्टव्यइतिवत्-अयामित्वाय अनालस्यायोपांशु अस्फुटोच्चारणं यथा स्यात्तथा विष्णुर्यष्टव्यः पूजनीय इत्यर्थकस्य विष्णुरुपांशुयष्टव्योयामित्वायेत्यनुवादवाक्यस्य यथास्तुतिपरत्वं तद्वत् । नचोपांशुयाजमंतरा यजतीत्यस्य यथा विधिपरत्वं विष्णुरुपांशुयष्टव्य इत्यस्य स्तुतिपरत्वं तथामैत्रेयीब्राह्मणे विधिवाक्याभावात्कथं श्रोतव्य इत्यस्य स्तुतिपरत्वमिति वाच्यम् । अज्ञातज्ञापकस्य विधित्वेन मैत्रेयीब्राह्मणब्रह्मात्मवाक्यानामप्यज्ञातज्ञापकत्वसंभवेन श्रोतव्य इत्याद्यनुवादस्य स्तुतिपरत्वसंभवादिति ! अतएव-वेदांतानां मुख्यविधिपरत्वाभावादेव । समन्वयसूत्रे-तत्तुसमन्वयात् इति सूत्रे । अनियोज्यविषयत्वात्-वेदांतानां सिद्धब्रह्मपरत्वेन वेदांतेषु कार्याभावेन कार्यविषयकस्वकीयत्वज्ञानवत्पुरुषरूपनियोज्याभावेन कार्यविषयकस्वकीयत्वज्ञानवत्पुरुषरूपनियोज्यविषयकत्वाभावात्, द्वितीयवर्णके-तत्तुसमन्वयादितिसूत्रद्वितीयव्याख्याने, टीकाकृता-वाचस्पतिसंज्ञकटीकाकारेण, एवं-नियोज्याभावः, तत्रैव-तत्तुसमन्वयादिति सूत्रद्वितीयव्याख्याने एव, तयोः-मननश्रवणयोः । तेषां-श्रवणमनननिदिध्यासनानां, एकरूपेण-अनन्यथासिद्धत्वे सत्यव्यवहितपूर्वक्षणवृत्तित्वस्वरूपेण ॥

मू०-तत्र निदिध्यासनं ब्रह्मसाक्षात्कारे साक्षात्कारणं "ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढाम्" इत्यादिश्रुतेः निदिध्यासने च मननं हेतुः अकृतमननस्यार्थदार्ढ्याभावेन तद्विषयनिदिध्यासनायोगात्।मनने च श्रवणं हेतुः श्रवणाभावे तात्पर्यानिश्चयेन शाब्दज्ञानाभावेन श्रुतार्थविषयकयुक्तत्वायुक्तत्वनिश्चयानुकूलमननायोगात्, तानि त्रीण्यपिज्ञानोत्पत्तौ कारणानीति केचिदाचार्या ऊचिरे अपरेतु श्रवणं प्रधानं मनननिदिध्यासनयोस्तु श्रवणात्पराचीनयोरपिश्रवणफलब्रह्मदर्शननिर्वर्त्तकतया आरादुपकारकतयांगत्वमित्याहुः । तदप्यंगत्वं न तार्तीयशेषत्वरूपम ॥

शि०प्र०—श्रवणमननयोस्तुमनननिदिध्यासनद्वारेत्याह ( तत्रेति साक्षादिति ) यद्यपि शक्तितात्पर्य्यविशिष्टवेदांतावधारणस्यैवापरोक्षज्ञाने-साक्षात्कारणत्वं तथापि शाब्दज्ञानपरोक्षनियमवादिमते ध्यानस्यैव साक्षाद्धेतुत्वाभ्युपगमात्तदभिप्रायेणोक्तमथवाऽप्रतिबद्धब्रह्मापरोक्षज्ञानमेवानर्थनिवृत्तिहेतुरन्यथा तत्त्वमस्यादिवाक्यस्यापरोक्षज्ञानजनकत्ववादिमते मनननिदिध्यासनवैयर्थ्यात्तत्र प्रतिबंधकनिवर्त्तकध्यानस्य साक्षात्कारणत्वम् । ननु श्रवणादीनां न तावद्दर्शपूर्णमासवत् समप्रधानभावेन ब्रह्मज्ञानेहेतुत्वं तेषामेकरूपेणाहेतुत्वात् नापि प्रयाजदर्शादिवत् शेषशेषिभावेन श्रुतिलिंगादेस्तत्प्रमाणस्याभावादित्याशंक्य प्रधानाप्रधानौदासीन्येन कारणत्वमात्रं विवक्षितमित्याह ( एतानीति ) न तार्तीयेति तृतीयाध्यायनिरूपितशेषत्वलक्षणांगत्वं नेत्यर्थः ॥

म० प्र०—मनननिदिध्यासनद्वारा—श्रवणस्य मनननिदिध्यासनद्वारा, मननस्य तु निदिध्यासनद्वारेति भावः ( अवधारणस्यैवेति ) अत्रैवकारेण ननु ध्यानस्येति ध्याननिष्ठसाक्षात्कारहेतुत्वव्यावृत्तिः, तदभिप्रायेण—शब्दज्ञानस्य परोक्षत्वनियमवादिमताभिप्रायेण, उक्तम्—ध्यानस्यात्मसाक्षात्कारकारणत्वमुक्तम्, अन्यथा-ब्रह्मापरोक्षज्ञानमात्रस्यानर्थनिवृत्तिहेतुत्वाभ्युपगमे, तत्र—अप्रतिबद्धब्रह्मापरोक्षज्ञाने । परममूले ( अर्थदार्ढ्याभावेनेति ) निदिध्यासनविषयनिश्चयाभावेनेत्यर्थः । परममूले ( तद्विषयेति ) श्रुतार्थविषयेत्यर्थः । समप्रधानभावेन—तुल्यप्रधानत्वेन, तेषां—श्रवणादीनाम्, तत्प्रमाणस्य—शेषशेषिभावविषयकप्रमाजनकस्य । परममूले ( पराचीनयोरिति ) परपूर्वकस्यांचुधातोः पश्चाद्भावार्थकत्वेनपश्चाद्भाविनोरित्यर्थः ॥

मू०—तस्य श्रुत्याद्यन्यतमप्रमाणगम्यस्य प्रकृते श्रुत्याद्यभावेऽसंभवात् । तथाहि व्रीहिभिर्यजेतेति दध्नाजुहोतीत्यादाविव मनननिदिध्यासनयोरंगत्वे न काचित्तृतीयाश्रुतिरस्ति नापि बर्हिर्देवसदनंदामीत्यादिमंत्राणां बर्हिःखंडनप्रकाशनसामर्थ्यवत् किंचिल्लिंगमस्ति नापि प्रदेशांतरपठितप्रवर्ग्यस्याग्निष्टोमे प्रवृणक्तीति वाक्यवत् श्रवणानुवादेन मनननिदिध्यासनविनियोजकं किंचिद्वाक्यमस्ति नापि दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति वाक्यावगतफलसाधनताकदर्शपौर्णमासप्रकरणे प्रयाजादीनामिव फल-

साधनत्वेनावगतस्य श्रवणस्यप्रकरणे मनननिदिध्यास-
नयोराम्नानम् ॥

शि० म०—ननु कारणताग्राहकादेव प्रमाणान्मननादेरंगत्वमवसीयते इत्याशंक्य प्रधानसाधारणत्वान्न तस्य निश्चायकत्वमित्यभिप्रेत्याह ( तस्येति ) श्रुत्याद्यभावमेवोपपादयति ( तथाहीति ) साक्षाद्विनियोजिकां श्रुतिं निराकृत्य तदनुमानद्वारा विनियोजकलिंगादीन्याशंक्य निरस्यति ( नापीति ) ननु मनननिदिध्यासनयोरप्राधान्येन प्रकरणाच्छ्रवणांगत्वमवगम्यते इत्याशंक्य सिद्धे हि श्रवणस्य ज्ञानलक्षणफलसाधनत्वेन प्राधान्ये तदाकांक्षालक्षणं प्रकरणं स्यात्तदेवतु नास्ति मानाभावात् । तथाहि किं दर्शपूर्णमासवद्विध्युद्देशे कामपदश्रवणात्फलान्वयः ॥

म० प्र०—कारणताग्राहकादेव—मंतव्यो निदिध्यासितव्य इत्यादिरूपादात्मसाक्षात्कारनिरूपितमनननिदिध्यासननिष्ठकारणताग्राहकादेव, प्रधानसाधारणत्वात्—कारणतायाः प्रधानेपि वृत्तित्वात्. तस्य—कारणताग्राहकप्रमाणस्य, ननिश्चायकत्वं—मननादिनिष्ठांगत्वनिश्चायकत्वं न अंगप्रधानवाक्ययोर्भिन्नत्वेनैकवाक्यस्य प्रधानाप्रधानविधायकत्वमेव न संभवतीति भावः । नच मंतव्य इत्यादिभिन्नमेव वाक्यमिति वाच्यम्, भिन्नवाक्यत्वे विनिगमनाविरहेण मननस्य निदिध्यासनस्य वांगित्वमितरयोश्चांगत्वमित्यनिष्टापातात् । नच श्रवणं विनेतरमनननिदिध्यासनानुपपत्त्या श्रवणस्य प्रधानत्वमितरयोरप्रधानत्वमिति वाच्यम् । अंगैर्विना प्रधानकर्मणोप्यनुपपन्नत्वेनांगेषु प्रधानत्वापत्तेरिति ( तदनुमानेति ) बर्हिश्छेदनं बर्हिर्देवसदनंदामीत्यनेन मंत्रेण बर्हिश्छेदनं कुर्यादिति श्रुतिबोधितं लिंगवन्मंत्रबोधितत्वात् । यत्र लिंगवन्मंत्रबोधितत्वं तत्र श्रुतिबोधितत्वमिति सामान्यव्याप्तौ सदनकरणादिवदित्यादिश्रुत्यनुमानेत्यर्थः । आशंक्य—तार्तीयशेषशेषिभावप्रमाणत्वेनाशंक्य परममूले ( प्रवृणक्तीति ) प्रवर्ग्याख्यंकर्मकुर्यादित्यर्थः । परममूले इति वाक्यवदितिदेशांतरपठितप्रवर्ग्याख्यकर्मणोंगत्वबोधकत्वं यथैतद्वाक्यस्य तद्वदित्यर्थः ( तदाकांक्षेति ) उभयाकांक्षेत्यर्थः । तदेव श्रवणस्य ज्ञानलक्षणफलसाधनत्वेन प्राधान्यमेव दर्शपूर्णमासवत् दर्शपूर्णमासविधायकवाक्ये कामपदश्रवणाद्यथा दर्शपूर्णमासयोः स्वर्गफलान्वयस्तद्वत् विध्युद्देशे श्रवणविधिवाक्ये फलान्वयश्रवणस्यात्मसाक्षात्कारलक्षणफलेनान्वयः ॥

मू०—ननु द्रष्टव्य इति दर्शनानुवादेन श्रवणे विहिते सति फल-
वत्तया श्रवणप्रकरणे तत्सन्निधावाम्नातयोर्मनननिदिध्या-

सनयोः प्रयाजन्यायेन प्रकरणादेवांगतेति चेन्न । ते ध्यानयोगानुगता अपश्यन्नित्यादि श्रुत्यंतरे ध्यानस्य दर्शनसाधनत्वेनावगतस्यांगाकांक्षायां प्रयाजन्यायेन श्रवणमननयोरेवांगत्वापत्तेः क्रमसमाख्ये च दूरनिरस्ते। किंच प्रयाजादिषु अंगत्वविचारः सप्रयोजनः पूर्वपक्षे विकृतिषु न प्रयाजानुष्ठानं सिद्धांते तु तत्रापि तदनुष्ठानमिति। प्रकृते तु श्रवणं न कस्यचित्प्रकृतिः येन मनननिदिध्यासनयोस्तत्राप्यनुष्ठानमंगत्वविचारफलं भवेत् । तस्मान्नतार्तीयशेषत्वं मनननिदिध्यासनयोः ॥

शि० म०-उत सिद्धसाध्यसमभिव्याहारे सिद्धं साध्यायोपयुज्यते इति न्यायात् । तत्राद्यं निराकृत्य द्वितीयमुत्थापयति ( नन्विति ) शृण्वंतोपि बहवो यं न विद्युरिति वाक्यं श्रवणस्य ज्ञानसाधनत्वे वक्रोक्त्या मानम् । तथा च श्रवणमेव प्रकरणीयमिति यदि ब्रूयात्तदा दोषांतरमाह ( किंचेति । विकृतिष्विति ) सौर्ययागादिष्वित्यर्थः ॥

म० प्र०-सिद्धं-स्वर्गादिकं साध्याय-यागादिसाध्यविधानाय, उपयुज्यते-उपयुक्तो भवति समर्थो भवतीति यावत् फले सति साधनविधानं दृष्टमिति भावः । नच दर्शनस्य जन्यत्वेन कथं सिद्धत्वमिति वाच्यम्, स्वर्गादीनां सिद्धत्वानुपपत्त्या जन्यत्वरूपसिद्धत्वासंभवेन प्रमाणांतरेण ज्ञातत्वरूपसिद्धत्वस्यावश्यंवक्तव्यत्वेन दर्शनस्य ब्रह्मविदाप्नोति परमित्याद्यर्थवादावगतत्वेन प्रमाणांतरेण ज्ञातत्वरूपसिद्धत्वसंभवात् न्यायात्फलान्वय इत्यन्वयः । तत्र-पक्षद्वयमध्ये । निराकृत्य-नापि दर्शपूर्णमासाभ्यामित्यादि ग्रंथेन निरस्य । परममूले ( अंगतेति ) सिद्धसाध्यसमभिव्याहारे इत्यादिन्यायेन श्रवणस्य दर्शनलक्षणफलवत्त्वे सिद्धे फलवत्सन्निधावफलं तदंगमिति न्यायेन मनननिदिध्यासनयोः प्रकरणप्रमाणाच्छ्रवणांगता स्यादिति पूर्वपक्ष्याशयः । परममूले ( अंगत्वापत्तेरिति ) न्यायापेक्षया वाक्यस्यप्रबलत्वेन ते ध्यानयोगानुगता अपश्यन्नित्यादिवाक्येन ध्यानस्य दर्शनलक्षणफलवत्त्वे निश्चिते प्रत्युतप्रकरणप्रमाणाच्छ्रवणमननयोरंगता स्यादिति सिद्धांत्याशय इति, वक्रोक्त्या-श्रवणस्य दर्शनलक्षणफलसाधनत्वेपि श्रवणस्य दर्शनलक्षणफलाभावोक्त्या, प्रकरणीयम्-प्रकरणप्रमाणवत्श्रवणस्य दर्शनलक्षणफलवत्त्वेन प्राधान्यमिति यावत् । परममूले ( पूर्वपक्षेइति ) प्रयाजादीनां दर्शपूर्णमासांगत्वाभावपक्षे, परममूले ( सिद्धांते इति ) प्रयाजादीनां दर्शपूर्णमासांगत्वपक्षे इत्यर्थः । परममूले तत्रापीति ) विकृतिष्वपीत्यर्थः. परममूले ( तदनुष्ठानमिति ) प्रयाजाद्यनुष्ठानमित्यर्थः ।

परममूले ( प्रकृतेष्विति ) द्रष्टव्य इत्यादिवाक्येष्वित्यर्थः । परममूले ( येनेति ) श्रवणस्य प्रकृतित्वेनेत्यर्थः । परममूले ( तत्रापीति ) श्रवणविकृतावपीत्यर्थः ॥

मू०-किंतु यथा घटादिकार्य्ये मृत्पिंडादीनां प्रधानकारणता चक्रादीनां सहकारिकारणतेति प्राधान्याप्राधान्यव्यपदेशः तथा श्रवणमनननिदिध्यासनानामपीति मंतव्यं सूचितं-चैतद्विवरणाचार्य्यैः शक्तितात्पर्य्यविशिष्टशब्दावधारणं प्रमेयावगमं प्रत्यव्यवधानेन कारणं भवति प्रमाणस्य प्रमेयावगमं प्रत्यव्यवधानात् मनननिदिध्यासनेतु चित्तस्य प्रत्यगात्मप्रवणतासंस्कारपरिनिष्पन्नतदेकाग्रवृत्तिकार्य्यद्वारेण ब्रह्मानुभवहेतुतां प्रतिपद्यते इति फलं प्रत्यव्यवहितकारणस्य तात्पर्य्यविशिष्टशब्दावधारणस्य व्यवहिते मनननिदिध्यासने तदंगे अंगीक्रियेते इति श्रवणादिषु च मुमुक्षूणामधिकारः ॥

शि० म०-एवं सति प्राधान्याप्राधान्यव्यपदेशं समर्थयति ( किंतुयथेति ) श्रवणमनननिदिध्यासनानां मध्ये श्रवणं प्रधानकारणं मननं निदिध्यासनं च तत्सहकारीत्यर्थः । नच ध्यानमेव साक्षात्कारणतया प्रधानमिति वाच्यम् । तात्पर्य्यविशिष्टवेदांतावधारणलक्षणश्रवणस्य प्रमेयावगमं प्रति कारणत्वेन प्राधान्यात् । इदमेव प्राधान्यं प्रथमवर्णके विवरणाचार्य्यैः सूचितमित्याह ( सूचितंचेति ) ननु ज्ञानसाधनतया श्रवणादिकं नानुष्ठेयं तत्राधिकारनिश्चयाद्वैदिके कर्मणि तन्निश्चयस्य प्रवृत्त्यंगत्वात् । नच नित्यानित्यविवेकवैराग्यशमदमादिसंपन्नोधिकारीति वाच्यं शमदमादीनां प्रकरणेन प्रमाणेनांगत्वावगमेन अधिकारनिमित्तत्वायोगादित्यत आह ( श्रवणादिष्विति । मुमुक्षूणामिति ) मोक्षसाधनब्रह्मज्ञानकामानामित्यर्थः । श्रवणादेर्ब्रह्मज्ञानफलकत्वेन तत्कामस्यैव तत्राधिकारौचित्यात उक्तंचैतत्पंचमवर्णके पंचपादिकाचार्य्यैः ब्रह्मज्ञानकामिनेदं शास्त्रं श्रोतव्यमिति ॥

म० प्र०-एवंसति-श्रवणादिषु तार्त्तीयशेषशेषिभावाभावे सति ( प्राधान्येति ) श्रवणादिष्वितिशेषः, तत्सहकारि-श्रवणस्य सहकारि । परममूले ( अव्यवधानेनेति ) साक्षादित्यर्थः । परममूले ( अव्यवधानादिति ) अनन्यथासिद्धत्वे सत्यव्यवहितपूर्वक्षणवृत्तित्वादित्यर्थः । तत्र-श्रवणादिषु ( अधिकारेति ) अधिकारनिमित्ताभावेना-

धिकारानिश्चयादित्यर्थः । तन्निश्चयस्य—अधिकारनिश्चयस्य, अंगत्वावगमेन—श्रवणांगत्वनिश्चयेन अधिकारनिमित्तत्वायोगात् यस्मिन्पुरुषे शमदमादिसंबंधस्तस्मिन्पुरुषे श्रवणाधिकार इति शमदमादीनां श्रवणाधिकारप्रयोजकत्वाभावात् प्रयाजादीनामिव यस्यांगत्वेन ज्ञानं तस्याधिकारप्रयोजकत्वाभाव इति भावः । परमपूले (व्यवहितेइति) उत्तरभाविनि फलं प्रतिव्यवहिते वेत्यर्थः । ननु मुमुक्षूणामित्यस्य मोक्षेच्छावतामित्यर्थमपहाय मोक्षसाधनब्रह्मज्ञानकामानामित्यर्थः किमिति क्रियते इत्यत आह ( श्रवणादेरिति ) तत्कामस्यैव—ब्रह्मज्ञानकामपुरुषस्यैव, तत्र—श्रवणादिषु ( औचित्यादिति ) मोक्षेच्छायां सत्यां तत्त्वज्ञानेच्छा तत्त्वज्ञानेच्छायां सत्यां श्रवणादिषु पुरुषप्रवृत्तिरिति तत्त्वज्ञानेच्छैवश्रवणादिषु पुरुषाधिकार इति भावः ॥

मू०—काम्ये कर्मणि फलकामस्याधिकारित्वात् मुमुक्षायां च नित्यानित्यविवेकस्येहामुत्रार्थफलभोगविरागस्य शमदमोपरतितितिक्षासमाधानश्रद्धानां विनियोगः ॥

शि० म०—ननु सर्वाधिकारकमिदं किं न स्यादित्यत आह ( काम्य इति । मुमुक्षायामिति ) यद्यपि मोक्षसाधनब्रह्मज्ञानचिकीर्षाया एवाधिकारनिमित्तत्वात्तत्रैव नित्यानित्यविवेकादीनां युक्तो विनियोग इति तथापि मोक्षकामनाया एव तत्प्रयोजकत्वमिति दर्शयितुं मुमुक्षोपन्यासः नहि मोक्षमकामयमानस्तत्साधनं ज्ञानं कामयते, नच नित्यानित्यविवेकादेः फलकामनाया हेतुत्वेमानाभाव इति वाच्यं श्रवणविधिप्रकरणे तत्संकीर्त्तनस्यैव मानत्वादन्यथासंकीर्त्तनवैफल्यंस्यात्तथाहि सोन्वेष्टव्य इति विधिप्रकरणे तद्यथेह कर्मचित इत्यादिना नित्यानित्यविवेकः परीक्ष्यलोकान कर्मचितानित्यादिना च इहामुत्रार्थफलभोगविरागः "शांतो दांत उपरतस्तितिक्षुः" इतिचशमादिर्दर्शितः विजिज्ञासस्वेति विचारविधिप्रकरणे वरुणंपितरमुपससारेति श्रुत्यंतरे च तद्विज्ञानार्थं सगुरुमेवाभिगच्छेदिति च गुरूपसदनं दर्शितम् । नच सर्वत्र फलश्रुतेस्तेषां फले एव विनियोगः स्यादिति वाच्यम् । शमादिषु फलश्रुतेरर्थवादत्वेन कामनोत्पादनद्वारा मुमुक्षोरधिकारप्रदर्शनार्थत्वेन वा फलश्रुतेरुपपत्तेः तदुक्तं विवरणाचार्य्यैः सर्वत्र फलश्रुतयः कामनोत्पादनद्वारा मुमुक्षोरधिकारप्रदर्शनार्था इति ॥

म० प्र०—चिकीर्षायाः—संपादनेच्छायाः ( अधिकारेति ) श्रवणादिषुयोग्यतेत्यर्थः । तत्रैव—ब्रह्मज्ञानचिकीर्षायामेव, तत्प्रयोजकत्वं—मोक्षसाधनब्रह्मज्ञानप्रयोजकत्वं, फलकामनायाः—मोक्षकामनायाः, तत्संकीर्तनस्यैव—विवेकादिसंकीर्तनस्यैव, अन्यथा—विवेकादेर्मोक्षकामनाहेतुत्वानंगीकारे ( संकीर्त्तनेति ) श्रवणविधिप्रकरणे विवेकादिसंकी

त्तेनेत्यर्थः। सः-आत्मा, अन्वेष्टव्यः-विचारितव्यः श्रवणीय इति यावत्। विजिज्ञासस्व-अन्नादिद्वारेण ब्रह्मविचारयस्व, सर्वत्र-सर्वेषु विवेकादिषु फलश्रुतेः। तेषां-विवेकादीनां फले-स्वफले, विनियोगः-संबंधः, अर्थवादत्वेन-श्रवणविध्यर्थवादत्वेन वाचस्पतिमते तु साक्षात्कारार्थवादत्वेन ( कामनेति ) मोक्षेच्छेत्यर्थः। अधिकारप्रदर्शनार्थत्वेन-शमादीनां फलश्रवणानंतरशमादिषु प्रवृत्तिः शमादिषु प्रवृत्त्यनंतरं मुमुक्षा ततः श्रवणादिषु मुमुक्षोरधिकार इत्यधिकारप्रदर्शनार्थत्वेन सर्वत्र-विवेकादिषु ॥

मू०-अंतरिंद्रियपरिग्रहः शमः बहिरिन्द्रियनिग्रहो दमः विक्षेपाभाव उपरतिः शीतोष्णादिद्वंद्वसहनं तितिक्षा चित्तैकाग्र्यं समाधानं गुरुवेदांतवाक्यविश्वासःश्रद्धा,अत्रोपरमशब्देन संन्यासोऽभिधीयते तथाच संन्यासिनामेव श्रवणेऽधिकार इति केचित्। अन्येतूपरमशब्दस्य संन्यासवाचकत्वाभावात् विक्षेपाभावमात्रस्य गृहस्थेष्वपि संभवाज्जनकादेरपि ब्रह्मविचारस्य श्रूयमाणत्वात् ॥

शि० म०-शमदमादिशब्दार्थान्भेदेन व्याचष्टे ( अंतरिन्द्रियेत्यादिना ) अत्र संन्यासिनामेव ब्रह्मविद्यायामधिकार इत्यत्रोपरमशब्दं प्रमाणयंतः "संन्यासयोगाद्यतयःशुद्धसत्त्वाः" इति श्रुतिं तात्पर्यभ्रमादुपोद्बलयंतः समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठमित्यादिश्रुतिं जनकरैक्यवसिष्ठानां ब्रह्मविचारप्रतिपादिकामाख्यायिकां गृहस्थोपि विमुच्यते इति स्मृतिं चाच्छादयंतस्तदुपोद्बलतया च स्वाश्रमस्यमोक्षाश्रमनामधेयादिकयुक्त्याऽऽभासं वदंतो गृहस्थादिकृतसाष्टांगप्रणाममात्रेण स्वात्मानमधिकं मन्यमाना ब्रह्मविचारे गृहस्थादीनामधिकारं तेषु प्रद्वेषमात्रेण केचिद्भिक्षवो दूषयंति तेषां मतमाह ( अत्रेति ) अस्तूपरमशब्दार्थः संन्यासस्ततः किमित्याशंक्य संन्यासस्य मुमुक्षाद्वारा विचाराधिकारनिमित्तत्वात्संन्यासिनामेवाधिकारः सिद्ध्यतीत्याह ( तथाचेति ) किमुपरमशब्देन शक्त्या संन्यासावगमउतार्थात् लक्षणया वा तत्राद्यं निराकृत्य द्वितीयं निरस्यति ( विक्षेपेति ) ब्रह्मविचारविरोधिविषयांतरव्यासंगाभावस्य गृहस्थेष्वपि केषुचित्संभवेन तस्य संन्यासानुमापकत्वायोगादित्यर्थः। तृतीयं दूषयति ( जनकादेरपीति ) तथाच गृहस्थादेर्ब्रह्मविचारप्रतिपादकश्रुत्यंतरविरोधान्न लक्षणाकल्पनमितिभावः ॥

म० प्र०–अत्र–संसारे, उपोद्बलयंतः–प्रमाणत्वेनोपन्यसंतः। आच्छादयंतः–अकथयंतःतदुपोद्बलतया स्मृत्याख्यायिकाच्छादनसहकारित्वेन तेषु–गृहस्थेषु परममूले, अत्रेति–शमादिषट्कसंपत्तिमध्ये परममूले ( उपरमशब्देनेति ) उपरमबोधकोपरतिशब्देनेत्यर्थः। उपरमशब्दार्थः–उपरमबोधकोपरतिशब्दार्थः। उपरमशब्देन उपरमबोधकोपरतिशब्देन, अर्थात्–संन्यासंविनोपरत्यनुपपत्त्या। तत्र–पक्षत्रयमध्ये ( व्यासंगेति ) पित्तसंचारेत्यर्थः। तस्य–ब्रह्मविचारविरोधिविषयांतरचित्तसंचाराभावस्य ( अनुमापकत्वेति ) कल्पकत्वेत्यर्थः॥

मू०–सर्वाश्रमसाधारणं श्रवणादिविधानमित्याहुः सगुणोपासनमपि चित्तैकाग्र्यद्वारा निर्विशेषब्रह्मसाक्षात्कारहेतुः तदुक्तम्॥

निर्विशेषं परं ब्रह्म साक्षात्कर्तुमनीश्वराः॥
ये मंदास्तेनुकंप्यंते सविशेषनिरूपणैः॥

शि० म०–ततश्च मुमुक्षासंपादकानां नित्यानित्यविवेकादीनामाश्रमिमात्रसाधारणत्वेनाधिकारनिमित्तस्य मुमुक्षुत्वस्यापि सर्वसाधारणत्वादाश्रमिमात्राधिकारकमेव श्रवणादिविधानमित्याह ( सर्वाश्रमेति ) ननु मोक्षसाधनब्रह्मज्ञानायश्रवणादीनिकर्तव्यानीत्युक्तं तदयुक्तम्। सगुणोपासकानां हिरण्यगर्भलोकं गतानामकृतवेदांतश्रवणानामपि तत्रैवांतिमुक्तिश्रवणादित्याशंक्य किमेतावता ब्रह्मसाक्षात्कारस्य व्यभिचारंचोदयत्युतश्रवणादेः। नाद्यः "नान्यः पंथाविद्यतेयनाय" "न कर्मणानप्रजया धनेन" इति च प्रतिषेधेन यज्ञादिवदेव सगुणोपासनस्यापि साक्षान्मुक्तिहेतुत्वाभावादित्यभिप्रेत्य द्वितीयं दूषयति ( सगुणेति ) चित्तैकाग्र्यलक्षणनिदिध्यासनद्वारा सगुणोपासनमपि ब्रह्मसाक्षात्कारहेतुरित्यर्थः। ननु सगुणविषयं ह्युपासनं तत्कथंनिर्गुणसाक्षात्कारोपयोगि अन्याविषयस्यापि हेतुत्वे अतिप्रसंगात्। प्रागपिवैराग्यादिसंपन्नस्य इहैव श्रवणमनननिदिध्यासनसंभवेन तत एव तत्साक्षात्कारोपपत्तौ सगुणोपासनद्वारा निदिध्यासने गौरवं चेत्याशंक्य कल्पतरुकारोक्तं समाधानमाह ( तदुक्तमिति ) ये हि वैषयिकफलानुषंगरहितभवांतरानुष्ठितकर्मजानितचित्तवैमल्यतया अनादिदुर्वासनां विषयगोचरामुत्सार्य्य तद्दूषितं चित्तं विषयेभ्योपकृष्य ततो निर्विशेषं ब्रह्मध्यातुमीशते तेनाऽत्राधिकारिणः किंतु येऽनादिदुर्वासनाजनितविषयांतरविक्षेपवशात्प्रागुपास्तेर्निर्विशेषं ब्रह्मध्यातुमशक्ततया तत्वं साक्षात्कर्तुमसमर्थास्ते एव मंदा निरूपितसगुणोपासनास्वधिकारिणः। तथाचाधिकारिभेदान्नोपासनावैयर्थ्यमितिभावः

म० प्र०-ततश्च-उपरतिशब्दस्य केनापि प्रकारेण संन्यासपरत्वाभानादेव, साधारणत्वेन-वृत्तित्वेन, सर्वसाधारणत्वात्-निखिलाश्रमिवृत्तित्वात् तत्रैव ब्रह्मलोके-एव, अंते-हिरण्यगर्भनाशकाले एव । व्यभिचारं-मोक्षफलेन व्यभिचारम् ( श्रवणादेरिति ) साक्षात्कारेण व्यभिचारं भवान्नोदयतीति शेषः । अतिप्रसंगात्-निर्गुणोपासनात्सगुणसाक्षात्कारापत्तिप्रसंगात्, प्रागपि-सगुणोपासनायाः प्रागपि, इहैव-अस्मिन् जन्मन्यंव, ततएव-श्रवणादित एव ( गौरवमिति ) सगुणोपासनायावैयर्थ्यमिति भावः ( भवांतरेति ) जन्मांतरेत्यर्थः । तद्दूषितं-विषयगोचरानादिदुर्वासनारूपदोषविशिष्टम्, ततः-विषयगोचरानादिदुर्वासनारूपप्रतिबंधाभावात् । अत्र-सगुणब्रह्मोपासनासु, प्रागुपास्तेः-सगुणब्रह्मोपास्तेः पूर्वम् । तत्त्वं-ब्रह्म, नोपासनवैयर्थ्यम्-प्रागपीत्यादिनाबोधितोपासनवैयर्थ्येन ॥

मू०-वशीकृते मनस्येषां सगुणब्रह्मशीलनात् ॥
तदेवाविर्भवेत् साक्षादपेतोपाधिकल्पनम् ॥
इति सगुणोपासकानां च अर्चिरादिमार्गेण ब्रह्मलोकंगतानां
तत्रैव श्रवणादुत्पन्नतत्त्वसाक्षात्काराणां ब्रह्मणा सह मोक्षः ॥

शि० म०-आद्यं दोषं निरस्यति ( वशीकृतइति ) एषां सगुणोपासकानां मनसि सगुणब्रह्मध्यानाभ्यासाद्ब्रह्मण्येव स्थिरीकृते सति निरुपाधिकस्यापि ध्यानसंभवेन तदेव ध्यातं निरुपाधिकतया साक्षात्कृतंभवतीत्यर्थः । तथाच विषयभेदाभावान्नातिप्रसंग इति भावः । ननु सगुणोपासनया वशीकृतचित्तानां निरुपाधिकब्रह्मध्यानादिहैवतत्साक्षात्कार इत्युक्तं तथासति प्रारब्धकर्मक्षये सत्यत्रैव विदेहकैवल्यापत्तौ उपासकानां कार्य्यब्रह्मणा सह मुक्तिरित्यभ्युपगमविरोध इत्याशंक्य नहि सर्वेषामुपासकानामिहैव ब्रह्मसाक्षात्कार इति ब्रूमः । किंतु निश्चित तात्पर्य्यकवेदांतावगतं तदनुकूलानुमानेन च संभावितं निर्विशेषं ब्रह्मसगुणोपासनया वशीकृतमनस्कतया ध्यातुं समर्थास्तेषामेव निरुपाधिकध्यानाभ्यासजनितब्रह्मसाक्षात्कारात्प्रारब्धक्षये सत्यत्रैव मुक्तिः । अन्येषां तु अकृतब्रह्मविचाराणां सगुणोपासकानां ब्रह्मलोकं गतानां तत्रैव साधितश्रवणादिसाधनानां साक्षात्कृतब्रह्मभावानां कार्य्यब्रह्मणा सह मुक्तिरित्यभिप्रेत्याह ( सगुणोपासकानांचेति ) उपासकानां केन मार्गेण ब्रह्मलोकगमनमित्याकांक्षायामाह ( अर्चिरादीति ) यत्राग्निवाय्वादयो गंतॄणां नेतारः सोऽर्चिरादिमार्गः । तथाच श्रुतिः "स एव देवयानं पंथानमासाद्याग्निलोकमायच्छति स वायुलोकं सवरुणलोकमिति तेऽर्चिषमभिसंभवंति" इति ॥

म० प्र०-तदेव-निरुपाधिकब्रह्मैव, इहैव-वर्तमानजन्मन्येव, तत्साक्षात्कारः-निर्गुणब्रह्मसाक्षात्कारः । तथासति-वर्तमानदेहे एव निर्गुणब्रह्मसाक्षात्कारे सति तदनुकूलानुमानेन वेदांततात्पर्य-सविषयकं तात्पर्यत्वात् गेहे घट इतिवाक्यतात्पर्यवत् । यद्वा अज्ञानाध्यासः साधिष्ठानकः अध्यासत्वात् शुक्तिरजताद्यध्यासवदित्यादिवेदांतानुकूलानुमानादिप्रमाणेन, अन्येषांतु-निश्चिततात्पर्यकवेदांतजन्यब्रह्मविषयकावगतिशून्यानां तु, यत्र-यस्मिन्मार्गे, सएव-उपासकएव, देवयानं-यांत्यनेनेतियानं मार्गो देवानां यानं देवयानमिति देवसंबंधिमार्गाभिन्नम् ॥

मू०-कर्मवतां धूममार्गेण पितृलोकं गतानामुपभोगेन कर्मक्षये सति पूर्वकृतसुकृतदुष्कृतानुसारेण ब्रह्मादिस्थावरांतेषु पुनरुत्पत्तिः तथाच श्रुतिः रमणीयचरणाः रमणीयां योनिमापद्यंते कपूयचरणाः कपूयां योनिमिति ॥

शि० म०-ननु यथा ग्रामं जिगमिषुं प्रति किंचिन्मार्गचिह्नमुपदिशति इतो वनं प्राप्य ततो न्यग्रोधं ततो ग्रामं प्राप्स्यतीति एवमर्चिरादिरपि मार्गचिह्नमेवोपदिश्यते अचेतनत्वात् । अथवा अर्चिरादयोभोगभूमयो लोकशब्दश्रवणादिति चेन्न, अर्चिरादेर्मार्गचिह्नत्वे भोगभूमित्वे वा गंतॄणां गमयितृभावेन गमनानुपपत्तेः । नच स्वातंत्र्येण गमनं मूर्च्छितादिवत्तस्य सपिंडीकृतत्वात् । तस्मादर्चिषमग्निस्वामिकं प्राप्त इति, तेन वायुस्वामिकंच प्राप्तो वायुना वरुणस्वामिकमित्यभ्युपगंतव्यं तथाचाहुराचार्य्यवाचस्पतिमिश्राः ॥

सपिंडीकरणानां हि सूक्ष्मदेहवतां गतौ ।
न स्वातंत्र्यं न चाग्न्याद्यानेतारोऽचेतनास्त्वेति ॥

ननु विद्याभेदेन गमनद्वये सति सगुणविद्यावतामर्चिरादिमार्गेणेति विशेषोक्तिर्युज्यते । नच निर्गुणविद्यावतां मार्गोस्तीत्याशंक्य पुण्यकर्मणां मार्गांतरसद्भावात्तदपेक्षया मार्गविशेषकीर्त्तनमित्याह ( कर्मवतामिति । धूमेति ) ते धूमं सभवंति धूमाद्रात्रिमित्यादिश्रुतेरिति भावः ( पितृलोकंगतानामिति ) यद्यपि कर्मिणां मार्गविशेषजिज्ञासायां तत्कीर्तनमेव युक्तं तथापि प्रसंगात्तेषामुपभोगपुनरुद्भवादिकीर्त्तनम् अत एव वक्ष्यति इत्यलंप्रसंगादागतप्रपंचेनेति ॥

म० प्र०-उपदिश्यते-श्रुत्याकीर्त्यते ( अचेतनत्वादिति ) अग्न्यादीनामिति शेषः ( श्रवणादिति ) नतूपासकानां नेतार इति भावः, तस्य-उपासकस्य सपिंडीकृतत्वात्-अदृष्टादिना कार्य्याक्षमेन्द्रियकत्वात् त्यक्तस्वस्थानकत्वाद्वा ( इत्यभ्यु-

पगंतव्यमिति ) उपासकस्योत्तरायणमार्गेणगमनक्रमस्तु प्रथमतोऽर्चिषं १ ततोऽहः २ ततः शुक्लपक्षं ३ ततो यान्षण्मासानादित्यउदङ्ङेति तान्षण्मासान् ४ ततः संवत्सरं ५ ततो देवलोकं ६ ततो वायुं ७ तत आदित्यं ८ ततश्चंद्रं ९ ततोविद्युतं १० ततो वरुणं ११ तत इंद्रं १२ ततः प्रजापतिं १३ ततो ब्रह्मलोकं १४ प्राप्नोतीति अत्रार्चिरादिशब्दैरर्चिराद्यभिमानिदेवता गृह्यन्ते इति न दोषः । परममूले ( पितृलोकमिति ) स्वरादिलोकमित्यर्थः । कर्मिगमनक्रमस्तु प्रथमतो धूमं १ ततो रात्रिं २ ततः कृष्णपक्षं ३ ततोदक्षिणायनषण्मासान् ४ मासेभ्यः पितृलोकं ५ पितृलोकादाकाशम् ६ आकाशाच्चंद्रमसमाप्नोतीति ७ अत्रापि धूमादिशब्दैर्धूमाद्यभिमानिदेवता ग्राह्याः, तत्कीर्त्तनमेव—कर्मिमार्गविशेषकीर्त्तनमेव ननु कर्मिणामुपभोगपुनरुद्भवादिकीर्तनमित्येवकारार्थः । प्रसंगात्तुस्मृतस्योपेक्षानर्हत्वरूपप्रसंगात्, तेषां—कर्मिणाम् ॥

मू०—प्रतिषिद्धानुष्ठायिनां तु रौरवादिनरकाविशेषेषु तत्तत्पापोपचितं तीव्रदुःखमनुभूय सूकरादिषु तिर्यग्योनिषु स्थावरादिषु चोत्पत्तिरित्यलं प्रसंगादागतप्रपंचेनेति। निर्गुणब्रह्मसाक्षात्कारवतस्तु न लोकांतरगमनं 'न तस्य प्राणा उत्क्रामंतीति' श्रुतेः किंतु यावत्प्रारब्धक्षयं सुखदुःखेह्यनुभूय पश्चादपवृज्यते ॥

शि० म०—दुष्कृतकारिणां तु न धूमादिनाऽर्चिरादिना वा मार्गेण गमनप्रसक्तिः किंतु येन केनचित् कुत्सितेन मार्गेण भयंकरपुरुषैर्नरकविशेषपातनमित्याह ( प्रतिषिद्धानुष्ठायिनांत्विति ) ननु निर्गुणविद्यावतोपि गतिरंगीकार्य्या विद्यावत्त्वाविशेषात, स एतान् ब्रह्मगमयतीत्यमानवपुरुषस्य परं ब्रह्मगमयितृत्वश्रवणाच्च। नचेदं ब्रह्मपदं कार्य्यब्रह्मपरं नपुंसकस्य परस्मिन्नेव ब्रह्मणि रूढस्य मुख्यार्थत्वसंभवे गुणकल्पनया कार्य्यपरत्वायोगात्। किंचेदं ब्रह्मपदं परब्रह्मपरमेव तत्प्रकरणे श्रूयमाणत्वादित्यत आह ( निर्गुणेति ) अयं भावः नतावत्परं ब्रह्म प्राप्यं तस्य सर्वात्मकस्य सर्वदा प्राप्तत्वात् । नचाप्राप्तत्वभ्रमात्प्राप्तमेव प्राप्नोतीति सांप्रतं तत्त्वमस्यादिवाक्यजन्यसाक्षात्कारात्प्राक्ताद्दशभ्रमसंभवेपि तद्गतस्तदसंभवात्। तस्मादगत्या कार्य्यब्रह्मण्येव कथंचिद्ब्रह्मशब्दो व्याख्येयस्ततश्चामानवः पुरुषः सगुणोपासकानामेव लोकांतरवर्त्तिकार्य्यब्रह्मप्रापयतीत्यभ्युपेयं तदाहुराचार्य्यवाचस्पतिमिश्राः ॥

कार्य्यस्याप्राप्तिपूर्वत्वादप्राप्तप्रापणे गतिः ॥
प्रापयेद्ब्रह्म नपरं प्राप्तत्वाज्जगदात्मकमिति ॥

तर्हि साक्षात्कारवतः सद्य एव विदेहकैवल्यं स्यादिति शंकते ( किंत्विति ) ज्योतिष्टोमादिस्वर्गस्यैहिकशरीरेणैव मोक्षस्य प्रारब्धकर्मणा प्रतिबंधात्तन्नाशानंतरमेव विदेहकैवल्यमित्याह ( यावदिति ) प्रारब्धं कार्य्यं युगकल्पादिपर्य्यंतमनुभोक्तव्यं सुखदुःखादिरूपं येन तत्प्रारब्धकर्म यथावसिष्ठादीनां पौरोहित्यादिप्रापकं कर्म तच्च प्रक्षिप्तशरवन्मध्ये न विनश्यति किंतु स्वकर्त्तव्यं सकलभोगमुत्पाद्यैव शाम्यतीत्यर्थः ॥

म० प्र०–गुणकल्पनया–लक्षणाकल्पनया, प्राप्यम्–अर्चिरादिमार्गेण प्राप्यं तादृशभ्रमेति–अप्राप्तत्वभ्रमेत्यर्थः । तद्वतः तत्त्वमस्यादिवाक्यजन्यसाक्षात्कारवतः । तदसंभवात्–अप्राप्तत्वभ्रमासंभवात्, कथंचित्–लक्षणतया ततश्च–तत्त्वमस्यादिवाक्यजन्यसाक्षात्कारवतो गमनासंभवादेव, अप्राप्तप्रापणे–अप्राप्तप्राप्त्यर्थं गतिः गमनं संभवतीति शेषः । सद्यएव–अज्ञाननाशेन तत्कार्य्यस्यापि नाशसंभवाज्ज्ञानोत्तरक्षणे एव ॥

सू०–ननु क्षीयंते चास्य कर्माणि तस्मिन् दृष्टे परावरे इत्यादिश्रुत्या ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथेति स्मृत्याचज्ञानस्य सकलकर्मनाशहेतुत्वनिश्चये सति प्रारब्धकर्मावस्थानमनुपपन्नमिति चेन्न तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथसंपत्स्ये इत्यादिश्रुत्या नाभुक्तं क्षीयते कर्मेत्यादिस्मृत्याचोत्पादितकार्य्यकर्मव्यतिरिक्तानां संचितकर्मणामेव ज्ञानविनाश्यत्वावगमात् ॥

शि० म०–ब्रह्मसाक्षात्कारवतः प्रारब्धकर्मावस्थानमाक्षिपति ( नन्विति ) श्रुतिस्मृतिभ्यां प्रारब्धकार्य्याणां देहपातलक्षणावधिप्रतीक्षावगमेन क्षीयंतेचास्य कर्माणीति सामान्यश्रुतेरनारब्धकार्य्यकर्मविनाशपरत्वादनारब्धकार्य्याणामेव सुकृतदुष्कृतकर्मणां विद्यासामर्थ्याद्विनाश इत्याह ( तस्येति ) अन्यथा देवर्षीणां हिरण्यगर्भमनूद्दालकप्रभृतीनां ब्रह्मसाक्षात्कारवतां सद्यो न जीविता भवेत् श्रूयते चैषां श्रुतिस्मृतीतिहासपुराणेषु तत्त्वज्ञता महाकल्पसमयांतजीविता च नह्येते महाधियो न ब्रह्मविदः ब्रह्मविदश्चाल्पपुण्ययशसो मनुष्या इति संभवति तस्मादागमानुसारेण प्रारब्धकार्य्याणां सत्यपि तत्त्वसाक्षात्कारेऽवस्थानं युक्तमिति भावः । ननु यदि तस्य तावदेव चिरमिति प्रारब्धकर्मावस्थानप्रतिपादिकश्रुत्यंतरवशात् क्षीयंते चास्य

कर्माणीति सामान्यश्रुतेरनारब्धकार्य्यपरत्वं तर्हि यथापुष्करपलाश आपो न श्लिष्यंते एवं हास्य सर्वे पाप्मानः प्रदूयंते इति विशेषश्रवणात्सामान्यवचनं पापे कर्मविशेषे उपसंहरणीयं किंचाधर्मस्य रागादिनिबंधनतया शास्त्रीयेन ब्रह्मज्ञानेन विनाशो युक्तः धर्मब्रह्मज्ञानयोस्तु शास्त्रीयत्वेन ज्योतिष्टोमदर्शपूर्णमासवदविरोधान्नोच्छेद्योच्छेदकभावः। अन्यथाऽनुत्पन्नफलस्यापि धर्मस्य नाशे स्वर्गादिसाधनत्वप्रतिपादिकज्योतिष्टोमवाक्यस्याप्रामाण्यापत्तिः। तस्माद्दुष्कृतमेव संचितं कर्मज्ञानविनाश्यमित्याशंक्य नहि पापस्य संचितपापत्वप्रयुक्तं विद्यानिवर्त्यत्वम्॥

म०प्र०-श्रुतिस्मृतिभ्यां-तस्य तावदेवचिरं यावन्न विमोक्ष्ये नाभुक्तंक्षीयते इत्यादि श्रुतिस्मृतिभ्यां, प्रतीक्षावगमेन-स्थितेरवगतत्वेन, अन्यथा-अनारब्धकार्य्याणामेव सुकृतदुष्कृतकर्मणां विद्यासामर्थ्याद्विनाशानभ्युपगमे किंतु सर्वकर्मनाशस्वीकारे, न श्लिष्यंते-क्लेदनादिरूपं स्वकार्य्यं न कुर्वंति, प्रदूयंते-पापकर्मणा फलसंबंधाभावेन नश्यंति॥

मू०-संचितं द्विविधं सुकृतं दुष्कृतं चेति तथाच श्रुतिः "तस्य पुत्रा दायमुपयांति सुहृदःसाधुकृत्यं द्विषंतः पापकृत्यम्" इति। ननु ब्रह्मज्ञानान्मूलाज्ञाननिवृत्तौ तत्कार्यप्रारब्ध कर्मणोपि निवृत्तेः कथं ज्ञानिनो देहधारणमुपपद्यते इति चेन्नाप्रतिबद्धज्ञानस्यैवाज्ञाननिवर्तकतया प्रारब्धकर्मरूपप्रतिबंधकदशायामज्ञाननिवृत्तेरनंगीकारात्। नन्वेवमपि तत्त्वज्ञानादेकस्य मुक्तौ सर्वमुक्तिः स्यात् अविद्याया एकत्वेन तन्निवृत्तौ क्वचिदपि संसारायोगादितिचेन्न इष्टापत्तेरित्येके॥

शि० म०-किंतु तन्निवर्त्योविद्यानिबंधनत्वप्रयुक्तं तच्चैतत्सुकृतेप्यविशिष्टम्। उभे एवैष एते तरतीति श्रुत्यंतरे सुकृतदुष्कृतयोरुभयोरपि ज्ञाननिवर्त्त्यत्वश्रवणात् "एवं हास्य सर्वे पाप्मानः प्रदूयंते" इत्यादिश्रुतेरपि सुकृतदुष्कृतनाशपरत्वात्। दृष्टप्रयोगश्चायं पुण्येपि पाप्मशब्दस्तद्यथा पुण्यपापे प्रक्रम्य सर्वे पाप्मानो निवर्त्तंते इत्यत्र ततश्च सुकृतदुष्कृतभेदेन द्विविधमपि ब्रह्मज्ञाननिवर्त्यमित्यभिप्रेत्याह ( संचितमिति। तस्य पुत्रा इति ) यद्यपि सर्वात्मकस्य ज्ञानिन इष्टद्विष्टविभागो नास्ति तथापि ज्ञानपूर्वकालाभिप्रायेण परदृष्ट्या वा तत्संभवादिति बोध्यम्। ननु ब्रह्मज्ञानादज्ञाननिवृत्तौ न जानामीति व्यवहारात्तन्निबंधनसंचित-

कर्मानिवृत्तिप्रसंगात् पूर्वावस्थातो विशेषाभावप्रसंगः । तन्निवृत्तौ-जीवन्मुक्तस्यदेहादिप्रपंचोऽनुपपन्न इति चोदयति ( नन्विति ) जीवन्मुक्तानां तत्त्वसाक्षात्कारात्पारमार्थिकत्वव्यावहारिकत्वसंपादनपटीयः शक्तिविशिष्टाज्ञानविनाशेपि प्रातिभासिकत्वसंपादनपटीयः शक्तिविशेषविशिष्टाज्ञानस्यानिवृत्तेर्देहादिधारणं युक्तमित्यभिप्रेत्याह ( नाप्रतिबद्धेति ) ननु सर्पबाधेपि भयकंपानुवृत्तिवज्जीवन्मुक्तस्याविद्या संस्कारवशादेव देहादिप्रपंचोस्तु किंशक्तिविशेषविशिष्टाज्ञानकल्पनया गौरवात्, शक्तिभेदेमानाभावाच्चेति चेन्नाविद्योपादेयदेहादिप्रपंचस्य तन्निवृत्ताववस्थानायोगात् ॥

म०प्र०—तन्निवर्त्येति—विद्यानिवर्त्येत्यर्थः । तच्चैतत्—विद्यानिवर्त्याविद्यानिबंधनत्वंच ( ब्रह्मेति ) नजानामीति व्यवहाराद्ज्ञानानिवृत्तावित्यन्वयः ( पारमार्थिकत्वेति ) प्रपंचनिष्ठपारमार्थिकत्वादीत्यर्थः । तन्निवृत्तौ—अविद्यानिवृत्तौ ॥

शि० म०—नचतत्त्वज्ञानोत्तरकालीनदेहादेरविद्यासंस्कार एवोपादानं नाविद्येति वाच्यं संस्कारस्यापि भावकार्य्यतयोपादानावश्यंभावेन सत्योपादानत्वे सत्यत्वापातेनाविद्याया एवोपादानत्वे तन्निवृत्तौ संस्कारस्याप्यनुपपत्तेः । सर्पादिभ्रमबाधेपि भयकंपानुवृत्तिर्नभ्रमसंस्कारादिना अनंतरमपि स्मरणान्यथानुपपत्त्या संस्कारस्य तावत्कालं स्थायितया तावत्पर्य्यंतं भयाद्यनिवृत्त्यापत्तेः । किंतु सर्पभ्रमजनितभयप्रयुक्तधातुवैषम्यविशेषादेव धातुवैषम्यं च कार्य्यानुसारेण यावत्कार्य्यावस्थायीति कल्प्यते ततो न संस्कारवशाज्जीवन्मुक्तस्य देहादिप्रपंचः । किंतु शक्तिभेदविशिष्टाज्ञानात् । नच शक्तिभेदेमानाभावः । कार्य्यबलेनैव तत्कल्पनात् । तथाहि यथा विक्षेपावरणात्मककार्य्यद्वयबलेन तदनुकूलं शक्तिद्वयं कल्प्यते तथेहाप्यश्रुतवेदांतानां प्रपंचे पारमार्थिकत्वभ्रमः । श्रुतवेदांतानामनुत्पन्नब्रह्मसाक्षात्काराणां व्यावहारिकत्वभ्रमः । उत्पन्नब्रह्मसाक्षात्काराणां जनकयाज्ञवल्क्योद्दालकोद्धवप्रह्लादप्रभृतीनां यावद्देहपातं प्रातिभासिकत्वभ्रम इत्यविद्यायास्तिस्रः शक्तयः स्वीकार्य्याः एतदभिप्रेत्य ॥

तुच्छानिर्वचनीया च तात्त्विकी च त्रिधामता ॥
मायाज्ञेया त्रिभिर्बोधैः श्रौतयौक्तिकलौकिकैः ॥

इति प्राचीनैरुक्तम् । अत एव शास्त्रेण नश्यति पारमार्थिकत्वभ्रमः।नश्यतिचापरोक्षाद्व्यावहारिकत्वभ्रमः प्रारब्धनाशात्प्रातिभासिकत्वभ्रमनाश इति शक्तित्रयस्यनाश इत्युक्तं तथाच श्रुतिः । "तस्याभिध्यानाद्योजना-

तत्त्वभावात् । भूयश्चान्ते विश्वमायानिवृत्तिः'' इति सर्वशक्तिविशिष्टाज्ञान-निवृत्तिरित्यर्थः ॥

म०प्र०—अनंतरमपि—सर्पभ्रमबाधोत्तरमपि, तावत्कालं—स्मरणपर्य्यंतम् । तावत्पर्य्यंतं—संस्कारपर्य्यंतं ( विक्षेपेति ) सर्पादिकार्य्येत्यर्थः ( इहापीति ) इह प्रपंचेपीत्यन्वय । व्यावहारिकत्वभ्रमः—व्यावहारिकत्वप्रतीतिः । प्रातिभासिकत्वभ्रमः—प्रातिभासिकत्वप्रतीतिः । अतएव—अविद्यायाः शक्तित्रयस्वीकारादेव, श्रुतिरिति—अज्ञानस्य शक्तित्रितयविशिष्टत्वे क्रमशो नाशे वा श्रुतिरूपप्रमाणमपि भवतीत्यर्थः । तस्य—स्वप्रकाशब्रह्मणः, अभिध्यानात्—सुरनरतिर्य्यगादिविशेषेषु स देव एव स्वरूपप्रदतया कारणत्वेनानंदरूपतया पोषकत्वेन सर्वसाक्षित्वेन च वर्तते इत्यभिध्यानात् । संसारे पारमार्थिकत्वापादकाज्ञानांशनिवृत्तिः । योजनात्—कार्य्यकारणसंघातसाक्षिभूतो यो हरः सएवास्मीत्याकारकात् । तत्त्वभावात्—द्वैतभ्रमतन्मूलाविद्यानिवर्त्तकापरोक्षसाक्षात्काररूपात् उभाभ्यांजन्मांतरापादकाज्ञाननिवृत्तिः । अंते—प्रारब्धकर्मांते द्वैतप्रतिभासमात्रनिर्वाहकनिखिलाविद्यानिवृत्तिः ॥

सू०—अपरेत्वेतद्दोषपरिहारायैवेंद्रोमायाभिरिति बहुवचनश्रुत्यनुगृहीतमविद्यानानात्वमंगीकर्त्तव्यमित्याहुः । अन्येत्वेकैवाविद्या तस्या एवाविद्याया जीवभेदेन ब्रह्मस्वरूपावरणशक्तयो नाना तथा च यस्य ब्रह्मज्ञानं तस्य ब्रह्मस्वरूपावरणशक्तिविशिष्टाविद्यानाशो नत्वन्यं प्रति ब्रह्मस्वरूपावरणशक्तिविशिष्टाविद्यानाश इत्यभ्युपगमात् । नैकमुक्तौ सर्वमुक्तिः, अत एव च यावदधिकारमवस्थितिराधिकारिकाणामित्यस्मिन्नधिकरणेऽधिकारिपुरुषाणामुत्पन्नतत्त्वज्ञानानामिंद्रादीनां देहधारणानुपपत्तिमाशंक्याधिकारापादकप्रारब्धकर्मसमाप्त्यनंतरं विदेहकैवल्यमिति सिद्धांतितं तदुक्तमाचार्य्यवाचस्पतिमिश्रैः ॥

उपासनादिसंसिद्धितोषितेश्वरचोदितम् ॥
अधिकारं समाप्तैये प्रविशंति परंपदमिति ॥
एतच्चैकमुक्तौ सर्वमुक्तिरिति पक्षेनोपपद्यते ॥

शि० म०—ननु कस्यापि मुक्त्यभावे शुकवामदेवादिमुक्तिप्रतिपादिकश्रुतिस्मृतिविरोध इत्यरुच्या मतांतरमाह ( अपरेत्विति ) ननु

लाघवसहकृतानुमानानुगृहीताजामित्येकवचनश्रुतिविरोधान्ना विद्याना-नात्वं मायाभिरिति बहुवचनश्रुतिस्तद्गतशक्तिभेदमादायैवोपपन्ना नचो-क्तदोषभयात्तन्नानात्वं वक्ष्यमाणरीत्या तद्दोषनिरासासंभवादित्यस्वरसा-त्समाधानांतरमाह ( अन्येत्विति ) एकमुक्तौ न सर्वमुक्तिरित्येतत्सूत्रका-रवचनेनापि द्रढयति ( अतएवेति ) नन्वेतत्सूत्रमन्यपरं कल्प्यतामित्यत आह ( तदुक्तमिति ) तथाचैकमुक्तौ सर्वमुक्तिरित्यभ्युपगतावेतदधिकर-णविरोधो दुर्वार इत्याह ( एतच्चेति ) नन्वेकाविद्यागतनानाशक्त्यभ्युप-गंतृमतेप्येकमुक्तौ सर्वमुक्तिरेव इयमावरणशक्तिर्निवर्त्या इयंनेत्यत्र नियामकाभावेन ब्रह्मसाक्षात्कारात्सर्वावरणशक्तिविशिष्टाविद्याविनाशावश्यं-भावादित्याशंक्य ॥

म०प्र०-( लाघवसहकृतानुमानेति ) एकाविद्ययैवसर्वकार्यसंभवेपि यदि नानाविद्या-स्वीकरणं तदा गौरवमिति लाघवतर्कसहकृतविवादास्पदप्रपंच आविद्यकः मिथ्यात्वा-च्छुक्तिरजतादिवदित्यनुमानेत्यर्थः । तद्गतेति-मायागतेत्यर्थः ( उक्तदोषेति ) एक-मुक्तौसर्वमुक्त्यापत्तिरूपदोषेत्यर्थः। वक्ष्यमाणरीत्या-तस्या एवाविद्याया इत्यादिपरम-मूलोक्तप्रकारेण, तद्दोषेति-एकमुक्तौ सर्वमुक्त्यापत्तिरूपदोषेत्यर्थः। परममूले (अत-एवेति ) एकमुक्तौसर्वमुक्त्यभावादेवेत्यर्थः। अन्यपरम्-अनुत्पन्नतत्त्वज्ञानपरम् । तथाच-अनुत्पन्नतत्त्वज्ञानपरत्वाभावे, परममूले ( एतच्चेति ) यावदधिकारमवस्थितिरित्याद्य-धिकरणमित्यर्थः ॥

मू०-तस्मादेकाविद्यापक्षेपि प्रतिजीवमावरणभेदोपगमेन व्य-
वस्थोपपादनीया तदेवं ब्रह्मज्ञानान्मोक्षः स चानर्थनि-
वृत्तिर्निरतिशयब्रह्मानंदावाप्तिश्चेति सिद्धं प्रयोजनम् ॥
इति श्रीधर्मराजदीक्षितविरचितायां वेदांतपरिभाषा-
यामष्टमः परिच्छेदः ॥

शि० म०-यथाशुक्तिसाक्षात्कारात्फलबलेनैकावरणशक्तिनाशः यथा सर्वज्ञानप्रागभावनिवृत्तिस्वरूपयोग्येन ज्ञानेन कस्यचिदेवप्रागभावस्य निवृत्तिरेवमन्येन प्रपंचोपलंभानुरोधेन यस्य ब्रह्मज्ञानं तदीयानर्थहेत्वा-वरणशक्तेरेव नाशो नान्यदीयसंसारहेत्वावरणशक्तीनामिति व्यव-स्थोपपद्यत इत्याह ( तस्मादिति ) परिच्छेदप्रतिपाद्यमर्थं निगमयति ( तदेवमिति ) ॥

प्रमादलिखितं त्यक्तं प्रमादालस्यदोषतः ॥
तत्क्षंतव्यं बुधैः सद्भिः क्षमा हि विदुषां धनम् ॥ १ ॥

सुवर्णखचिताकाराकृतिरेषा मया कृता ॥
विदुषामस्तु वेदांतशिखामणिरलंक्रिया ॥ २ ॥
अनेन मत्प्रबंधेन वेदांतार्थावलंबिना ॥
गुरुकारुण्यलब्धेन तारकं ब्रह्म तुष्यतु ॥ ३ ॥
वंदेहं वंदनीयानां वंद्यां वाचामधीश्वरीम् ॥
कामिताशेषकल्याणकलनाकल्पवल्लरीम् ॥ ४ ॥

इति श्रीमद्धर्मराजाध्वरीन्द्रात्मजरामकृष्णाध्वरिविरचिते वेदांत-
शिखामणावष्टमः परिच्छेदः ॥ ८ ॥

म० प्र०—फलबलेन—कालांतरीयरजतभ्रांतिबलेन, स्वरूपयोग्येन—कारणतावच्छेदकज्ञानत्वरूपधर्माक्रांतेन ( सुवर्णेति ) सुवर्णखचितभूषणमिवाकारो यस्याःसा तथा मया कृता एषा वेदांतशिखामणिः कृतिर्विदुषामलंक्रिया भूषणक्रियाऽस्त्विति योजना । अशेषकल्याणकलनाकल्पवल्लरीम्—सकलसुखप्राप्तिहेतुकल्पवृक्षलताम् ॥

जातंयतो विश्वमिदं तु यस्मिन्स्थित्वा लयं याति भवांतकाले ॥
तं योगिवर्यं मुनिभिः प्रतीक्ष्यं श्रीनानकाख्यं प्रणमामि नित्यम् ॥ १ ॥
भवदावाग्निसंतप्तानुद्धर्तुमिच्छया जनान् ॥
माययोपात्तकायं तं भजे श्रीचंद्रमीश्वरम् ॥ २ ॥
येभ्यो मया ज्ञानमशेषमाप्तं लोकेन चैतन्यमिवोष्णरश्मेः ॥
कायेन वाचा मनसापि वंदे श्रीमद्गुरूणां चरणारविंदम् ॥ ३ ॥
यद्गीस्तुपूषेवतमोनिहंति मोहं परानंदसमूहदोग्ध्री ॥
विद्यागुरूंस्तान्सततं नमामः श्रीब्रह्मविज्ञानपदाभिधेयान् ॥

इति श्रीमदुदासीनवरश्रीमद्ब्रह्मविज्ञानाभिधगुरुप्रसादलब्धोदासीनामरदासशब्द-
वाच्याविर्भूतायांधर्मराजाध्वरींद्रात्मजरामकृष्णाभिधेयविरचितवेदांत-
शिखामणेः प्रभायामष्टमः परिच्छेदः समाप्तः ॥ ८ ॥

---

